## [ छकारः ]

छत्रा मधुरिकायां स्यात् छत्रमातपवारणे ।
छाया पङ्क्तौ दीप्त्यभावे प्रतिमार्कस्त्रियोस्त्विषि ।। १ ।।

छेको गृहासक्तपक्षिमृगयोर्नागरे तथा ।
छिकुरः पक्षिभेदेऽपि गृहबभ्रौ भुजङ्गमे ।। २ ।।

छलं छद्म[1]स्खलितयोश्छदनं पत्रपक्षयोः ।
छदो गरुति पत्रे च छन्दनं रहसि स्मृतम्[2] ।। ३ ।।

छन्दः श्रुतौ गायत्र्यादौ छद्म कैतवसाधने ।
छिद्रं [3]स्याद्दूषणे गर्ते छन्दः स्यादाशये वशे ।। ४ ।।

।। इति छकारः ।।



१. G. छदनयोः
२. IO² विस्मृते
३. G omits स्यात्

*

## [ जकारः ]

जन्या नवोढाभृत्यादौ जामातुरपि वत्सले ।
जननीये जनितरि जन्यं कौलीनयुद्धयोः ॥ १ ॥

जगती पिष्टैपे लोके पृथ्वीछन्दोविशेषयोः ।
जगत्तु जङ्गमे दृष्टं जिनोऽर्हति तथागेते ॥ २ ॥

जीवको भैषज्यभेदे[3] क्षपणे वृद्धिजीविनि ।
जन्तौ श्रेष्ठे पीतशाले जीवनं वर्तनाम्बुनोः ॥ ३ ॥

जीवातुः कथितो जीवे तथा जीवितभेषजे ।
जृम्भितं जृम्भणोत्फुल्लप्रवृद्धेषु विचेष्टिते ॥ ४ ॥

जीवो जन्तौ गुरौ जीवं प्राणे जीवा धनुर्गुणे ।
जिगीषाशब्द उद्दिष्टो व्यवसायजयेच्छयोः ॥ ५ ॥

जटा केशविकारे स्यान्मांसीपादपमूॅलयोः ।
जघनं तु कॅटीपूर्वभागे योषित्कटावपि ॥ ६ ॥

भवेज्जनपदो देशे जने च परिकीर्तितः ।
जयनं तुरगादीनां सन्नाहे विजयेऽपि च ॥ ७ ॥

ज्योत्स्ना चन्द्रमसो भासि स्फुरज्ज्योतिर्निशि स्मृता ।
ज्योतिर्दीप्त्यग्नितारासु वेदाङ्गान्तरनेत्रयोः ॥ ८ ॥

जगलः पिष्टमद्ये स्यान्मोदके कितवे तथा ।
जैवातृकः सुधारश्मावायुष्मति कृषीवले ॥ ९ ॥

१. G. विष्टपे.
२. G. गमे.
३. IO[1] and G add च.
४. G. मालयोः.
५. IO[1] and IO[2] वटी.

जातिश्छन्दसि सामान्ये मालत्यां जन्मगोत्रयोः ।
ज्यायान् ज्येष्ठे चातिशये प्रशस्येऽतिजरत्यपि ॥ १० ॥

जालं कोरक आनाये दम्भे गवाक्षवृन्दयोः ।
जीवितेशो यमे ख्यातो वल्लभे च धनागमे ॥ ११ ॥

जम्भो दमे च जम्भीरे दैत्यदन्तप्रभेदयोः ।
जर्जरः कथितो जीर्णे शक्रध्वजे च कोकिले ॥ १२ ॥

जघन्यं गर्हिते पश्चात् जिष्णुः पार्थेन्द्रजेतृषु ।
जङ्गलं निर्जले मांसे ज्वलितं दग्धभास्वतोः ॥ १३ ॥

जठरं कठिने कुक्षौ जातं जन्मनि संभृतौ ।
जिह्मस्तु कुटिले मन्दे जामिः स्वसृकुलस्त्रियोः ॥ १४ ॥

जम्बुको वरुणे फेरौ जीमूतोऽब्दे नगान्तरे ।
जघन्यजोऽनुजे शूद्रे ज्या पृथिव्यां धनुर्गुणे ॥ १५ ॥

जया गौरीजयन्त्योश्च जवा पुष्पे जवा जपे ।
जम्बालः शैवले पङ्के जोषं तूष्णीं सुखेऽव्ययम् ॥ १६ ॥

॥ इति जकारः ॥



१. IO[2] दग्धतास्वतोः.

२. R reads this ardha thus :—
प्रहरे संयमो[?]जामिः स्वसृकुलस्त्रियोः p. 732.

## [ झकारः ]

झल्लरिः केशचक्रे च शुद्धे क्लेदेऽपि दृश्यते ।
झिल्ली कीटान्तरे स्थालीलग्नदग्धान्धसि स्मृता ॥
झषा नागवलायां स्यात् झषो मत्स्ये झषं खिले ॥ १ ॥

॥ इति झकारः ॥



१. IO[2]. कदाम्बरे.

## [ टकारः ]

टट्टरी वितथाख्याने लम्पापटहवाद्ययोः ।
टगरष्टङ्कणाक्षारे केकराक्षेऽपि से स्मृतः ॥ १ ॥

॥ इति टकारः ॥



१. IO². संभवः,

## [डकारः]

डिम्भः शिशौ च मूर्खे च डिम्बः प्लीहनि विप्लवे ॥ १ ॥

॥ इति डकारः ॥



## [ तकारः ]

तलस्ताले चपेटे च तलं चाधःस्वरूपयोः ।
कार्यबीजे प्रकोष्ठे च ज्याघातैवारणे मतः ॥ १ ॥

तारो गाढस्वने मुक्तशुद्धौ निर्मलमौक्तिके ।
तारं रूप्ये तार इव तारा च नेत्रमध्ययोः ॥ २ ॥

तालो गीतिक्रियामाने मध्यमाङ्गुष्ठनामिते ।
तृणराजे हस्ततले तालं तु हरितालके ॥ ३ ॥

तीर्थं क्षेत्रेऽध्वरे पात्रे शास्त्रे सलिलगोचरे ।
योषिद्रजस्युपाये स्यादुपाध्याये च मन्त्रिणि ॥ ४ ॥

तन्त्री वीणागुणे नाड्यां तन्त्रं द्व्यर्थे परिच्छदे ।
तन्तुवाये वरे जायौ सिद्धान्ते राष्ट्रवृद्धयोः ॥ ५ ॥

तरलो भास्वरे हारे हारमध्यमणौ चले ।
तरला सुरायवाग्वोस्त्रिदिवः खे सुरालये ॥ ६ ॥

तमोपहस्तमोनुच्च मार्तण्डे वह्निचन्द्रयोः ।
तृष्णातर्षतृषशब्दाः पिपासायामथेप्सिते ॥ ७ ॥

तपस्विनी जटामांस्यां तपस्वी तापसे मतः ।
तपो धर्मे व्रते चापि तपा माघे च दृश्यते ॥ ८ ॥

तुला पलशते माने सादृश्ये स्तम्भपीठके ।
तमो राहौ तमः शोके गुणभेदतमिस्रयोः ॥ ९ ॥

१. IO[2]. घाते विभारकल्पके.
२. IO[2]. गीत.
३. IO[2]. सतामांस्यां.
४. IO[2]. तपस्वी दयार्हे यतौ.
५. IO[1] and G. सुम्भपीठके.

तीक्ष्णं विषे रणे लोहे कथ्यते खरयोगिनोः ।
त्र्यञ्जटः शिक्यभेदेऽपि धौताञ्जन्यां च कुत्रचित् ॥ १० ॥

तालितं [1]तौलितपटे वाद्यभाण्डे गुणे तथा ।
त्रुटिः कालप्रमाणे स्यादेलायां संशये लवे ॥ ११ ॥

तमिस्रा ताम[2]सीरात्रौ दृश्यते च तमस्तै[3]तौ ।
तल्पं कलत्रे शयने गृहभेदे च दर्शितम् ॥ १२ ॥

तातगुः क्षुद्रताते स्यात्तथा तातहिते मतः ।
तोक्ममभ्रे [तोक्मं यवे] हरिन्मात्रे [4]कर्णयोर्मलकेऽपि च ॥ १३ ॥

तिलकं चित्रके क्लोम्नि जटुलद्रुमभेदयोः ।
ततं वीणादिवाद्ये स्याद्व्यासविस्तृतयोरपि ॥ १४ ॥

तितिलं नन्दके ज्ञातं करणे तिलपिच्चटे ।
[5]तौरलं तप्तमात्रे स्यात् तायनोऽपि व्रजे मतः ॥ १५ ॥

तिक्ता स्यात्कटुरोहिण्यां तिक्तस्तु सुरभौ रसे ।
[6]तैलिमं कुटिले तल्पे त्रपु रङ्गे च सीसके ॥ १६ ॥

त्रयी वेदे त्रिविद्यायां त्वक् चर्मणि प्रकथ्यते ।
तुङ्गो महति पुन्नागे तक्षकस्तक्षनागयोः ॥ १७ ॥

तरस्वी वेग अनिले त्यागौ[7] उत्सर्गदानयोः ।
तृणता तृणचापे च त्रेता वह्नित्रये युगे ॥ १८ ॥

तरणिर्नौसहार्केषु तरुणं युवनव्ययोः ।
तोदनं व्यथने तोत्रे तलिनं स्वच्छलेशयोः ॥ १९ ॥

१. IO[2]. तुलित.
२. IO[2]. तामसो.
३. IO[2]. तलस्तनौ.
४. IO[2]. कर्णयोर्मले विस्तरे.
५. IO[2]. ताम्रलं.
६. IO[2] adds दृष्टस्वरतक्षितकविश्व-
कर्मात्मवोः
७. IO[1]. त्यागावुत्सर्गं.

तुषोऽक्षधान्यत्वचोस्त्विट् कान्तौ च भासि च स्मृता ।
ताम्रं वर्णान्तरे शुद्धे तन्त्रीनिद्राप्रमीलयोः ॥ २० ॥

तेमनं व्यञ्जने क्लेदे तामो भीषणदोषयोः ।
तोकं स्यादात्मजे पुत्र्यां तुषारः शीकरे हिमे ॥ २१ ॥

तिष्यं नक्षत्रके मासे तार्क्ष्यः स्याद्गरुडाश्वयोः ।
तारा बले तथा वेगे तेजोऽशौ बलशुक्रयोः ॥ २२ ॥

तावन्मानेऽवधौ कार्त्स्न्येऽवधारणे[..तथा]व्ययम् ।
तिरोऽन्तर्धौ तिर्यगर्थे तु स्याद्भेदेऽवधारणे ॥ २३ ॥[1]

॥ इति तकारः ॥



1. R attributes to Ajaya the following additional verses :—
तालस्कन्धे तमालः स्यात् खड्गेऽपि तिलके पुमान् ॥ P 417
[तुत्थं] अन्यत् कृत्रिमं स्याद्रसाञ्जनम् ॥ P 566.

## [ दकारः ]

दक्षिणा दानभेदे चै दक्षिणो वामतोऽन्यतः ।
सरले दक्षिणोद्भूते परच्छन्दानुवर्तिनि ॥ १ ॥

दायः स्याद्यौतके द्रव्ये लयादिदानयोरपि ।
विभक्तव्यपितृद्रव्ये दृष्टः सोल्लुण्ठभाषणे ॥ २ ॥

दृढं गाढे दृढः स्थूले दृढः स्याद्बलवत्यपि ।
द्वितीया कथ्यते पत्न्यां पूरण्यामपि च द्वयोः ॥ ३ ॥

दिग्धो विषाक्तविशिखे लिप्ते स्नेहप्रबन्धयोः ।
दुग्धतालीयशब्दोऽयं दुग्धांशे दुग्धफेनेके ॥ ४ ॥

दण्डो दमे चै मन्थाने सेनायां लगुडे तथा ।
दशा वर्तावस्थायां वसनान्तेरचेतसोः ॥ ५ ॥

द्रोणोऽर्जुनगुरौ वृद्धे काकमानप्रभेदयोः ।
दशमीस्थो नष्टबीजे स्थविरे च स्मृताशने ॥ ६ ॥

दृग्दृष्टी दर्शने बुद्धौ लोचने दृक् च वीक्षके ।
दर्शनं स्वप्नधीज्यासु नेत्रशास्त्रोपलब्धिषु ॥ ७ ॥

दुरोदरं पणे द्यूते दुरोदरोऽक्षदेविनि ।
द्रविणं द्युसुरद्रव्ये कथ्यने च पराक्रमे ॥ ८ ॥

द्रव्यं तु भेषजे भव्ये द्रविणे पित्तले तथा ।
दाक्षायणी स्मृता गौर्यामश्विन्यादौ प्रकथ्यते ॥ ९ ॥

१. IO². तु
२. IO². केळके.
३. IO². दमेऽथ.
४. IO². वसनाधर.
५. O¹. दृशनः.
६. IO². न्या····संहते.

दिवाभीतो भवेच्चौरे पेचके कुमुदाकरे ।
दशनोच्छिष्ट उच्छ्वाये चुम्बनाधरयोरपि ॥ १० ॥

दरो भये तथा गर्ते मनागर्थे दराव्ययम् ।
दिवाकीर्तिस्तु चण्डाले[1] नापिते च प्रयुज्यते ॥ ११ ॥

दक्षस्तु निपुणे शंभुवृषे धातरि कुक्कुटे ।
दवदावौ वनाग्नौ स्यात्कानने कथितः क्वचित् ॥ १२ ॥

दृष्टान्तशब्द उद्दिष्ट उदाहरणशास्त्रयोः ।
देवलं व्यवहारे च जिगीषाक्रीडयोरपि ॥ १३ ॥

दुन्दुभिः कथ्यते भेर्यामक्षबिन्दुत्रिकद्वये ।
दुर्जातं[3] व्यसने दृष्टमसम्यग्जातवस्तुनि ॥ १४ ॥

दर्शः पक्षान्तयोगे स्यात् दृष्टौ सूर्येन्दुसङ्गमे ।
द्वीपवती भवेन्नद्यां द्वीपवान् जलधौ नदे ॥ १५ ॥

दानं करिमदांहत्योः खण्डनावनशुद्धिषु ।
दुकूलं सूक्ष्मवसने क्षौमेऽपि परिकीर्तितम् ॥ १६ ॥

देवो राज्ञि सुरे देवी महिषीमूकयोरपि ।
द्वन्द्वं[4] रहस्यमिथुनकलहेषु तथा युगे ॥ १७ ॥

द्योदिवौ नभसि स्वर्गे दमो दमनदण्डयोः ।
दायादस्तनये ज्ञातौ दीक्षा तु यजनेऽर्चने ॥ १८ ॥

दवो नर्मणि निर्यासे द्रुघणो मुकुरे विधौ ।
दिवौकाश्चातके देवे द्वापरः संशये युगे ॥ १९ ॥

द्विजो विप्रेऽण्डजे दन्ते द्युतिः कान्तित्विषोरपि ।
दस्युः शत्रौ च चौरे च द्रुतं शीघ्रविलीनयोः ॥ २० ॥

१. $IO^2$. चाण्डाले.
२. $IO^1$. गमनेऽपि प्रयुज्यते.
३. $IO^2$. दुर्ज्ञातं.
४. $IO^1$. वृन्दं.

द्रुमो वृक्षे पारिजाते द्विजिह्वो भुजगे खले ।
दुर्गतिर्नरके दुःखे दिष्टिरानन्दमानयोः ॥ २१ ॥

द्वारं तु द्वार्युपाये च दर्शको द्रष्टृद्वाःस्थयोः ।
दुर्वर्ण[1] कुवर्णे रूपे दुर्विधौ भुजगे खले ॥ २२ ॥

दलं पत्रे दलः खण्डे दिष्टाख्या [2]विधिकोलयोः ।
दाला यानान्तरे नाल्यां दतोऽद्रिक[3]टके वटे ॥

दीप्तं स्फुरत्प्रभे दग्धे दार्वेधोदेवदारुणोः ॥ २३ ॥

॥ इति दकारः ॥



१. IO² दुर्गते.
२. IO² व्याधि.
३. IO¹ दलौद्रि.

## [ धकारः ]

धर्माख्या सोमपे न्याये यागाद्याधारकर्मसु ।
दयाहिंसास्वभावेषु सादृश्ये साधुसङ्गमे ॥ १ ॥

धातुः स्याद्रसरक्तादौ महाभूते च तद्गुणे ।
श्लेष्मादावश्मविकृतौ चक्षुरादौ च कीकसे ॥ २ ॥

ध्रुवं नित्ये शश्वत्तर्के ध्रुवश्च स्वौन[स्थाणु]कीलयोः ।
निश्चितेऽपि ध्रुवा शालपर्ण्यां स्रग्गीतिभेदयोः ॥ ३ ॥

धावनी स्याद्धौताञ्जन्यां रजन्यां धावनं गतौ ।
शौचे शीघ्रगतौ चापि धनदो दातृयक्षयोः ॥ ४ ॥

धारा सन्ततौ सैन्याग्रे खड्गाङ्गे वाजिनां गतौ ।
धवली गोप्रभेदे च वरुणस्य फले तथा ॥ ५ ॥

धिष्ण्यं स्वाधा[स्थाना]ग्निदेहेषु नक्षत्रबलयोरपि ।
धनुः स्थलेऽथ कोदण्डे धन्वा तु मरुमण्डले ॥ ६ ॥

धराख्या कथिता भूमौ शैलकार्पासतूलयोः ।
धिषणः स्यात्सुराचार्ये धिषणा बुद्धिनिद्रयोः ॥ ७ ॥

धाम तेजसि गेहे च प्रभावजन्मनोरपि ।
धर्मराजो यमे बुद्धे कथ्यते च युधिष्ठिरे ॥ ८ ॥

धात्री त्वामलकीभूम्योरुपमातरि चेष्यते ।
धृतिः सौख्ये च धैर्ये च धारणे चाध्वरे स्थितौ ॥ ९ ॥

धवला गवि धवलश्चारौ शुभ्रे वृषे वरे ।
ध्वजो लिङ्गे पताकायां चिह्ने पूर्वदिशो गृहे ॥ १० ॥

१. IO[2] स्वानि,     २. IO[1] धारिणे,

धनं तु गोधने वित्ते धनञ्जयोऽग्निपार्थयोः ।
धीरः संख्यावति धैर्ययुक्ते च कथ्यते बुधैः ॥ ११ ॥

धूर्तः खले च धूस्तूरे धूतं त्यक्ते च कम्पिते ।
धमनी स्याच्छिवोषध्योर्धवो वृक्षे नवे प्रभौ ॥ १२ ॥

धेनुका धेनुहस्तिन्योर्धार्वाटश्चातके हये ।
धर्षणं रतातिभृत्योः ध्वाङ्क्षः काके बकेऽपि च ॥ १३ ॥

धाराङ्गमवतारेऽसौ धीदा सुताधियोरपि ।
धूमकेतुरुत्पातेऽग्नौ धिङ्निर्भर्त्सननिन्दयोः ॥ १४ ॥

॥ इति धकारः ॥



१. $IO^2$ धीरः सुधीः[धी]धैर्यवतोः २. $IO^1$ ध्वाङ्क्षो. ध्वाटयबोः[?]

*

## [ नकारः ]

निष्कमष्टोत्तरस्वर्णशते हेम्नि च तत्पले ।
उरोविभूषणे कर्षे दीनारेऽपि प्रयुज्यते ॥ १ ॥

निस्सरणं भवेद्याने मारणे भवनिर्गतौ ।
उपाये निर्गमद्वारे नाकः स्वर्गान्तरिक्षयोः ॥ २ ॥

नागो गजे काद्रवेये नागं सीसकरङ्गयोः ।
निर्वेशो मूर्च्छने स्यात उपभोगे च वेतने ॥ ३ ॥

नीवी जघनवस्त्रस्य ग्रन्थौ मूलधने तथा ।
नभाः प्रावृषि वृद्धे च श्रावणे च नभोऽम्बरे ॥ ४ ॥

निकायो लक्षसंघे च भूरिवस्तुचये गृहे ।
निगमो नगरे वेदे निश्चये च वणिक्पथे ॥ ५ ॥

निर्घटः परकौलीनप्रिये निर्दयभाषिणि ।
निर्वातो दृढसन्नाहे निवासे वातवर्जिते ॥ ६ ॥

निर्वृतिर्मनसस्तोषे मोक्षेऽस्तमयबाढयोः ।
नेत्रमङ्गे गुणे वस्त्रभेदेऽक्षिवृक्षमूलयोः ॥ ७ ॥

निर्यूहो नागदन्ते च निर्यासे द्वारि शेखरे ।
निष्क्रामो बुद्धिसामर्थ्ये निर्गमे दुष्कुले तथा ॥ ८ ॥

निर्भर्त्सनं खलीकारे दृष्टमेतदलक्तके ।
निह्नवस्त्वपलापे स्याद्विश्वासे निष्कृतावपि ॥ ९ ॥

१. IO[1] omits च.
२. IO[1] भूम.
३. Bhānuji reads निवातः III-iii-84.
४. IO[2] निर्वेहे.

निशाचरी शिवासत्योर्निशाचरोऽहिरक्षसोः ।
निर्यातनं वैरैशुद्धौ दाने न्यासार्पणे तथा ॥ १० ॥
निर्वासनं वधे दृष्टं नगरादेर्बहिष्कृतौ ।
नाशोऽनुपलम्भे दृष्टो निधने च पलायने ॥ ११ ॥
निर्देशः कथने दृष्ट आज्ञायां देशवर्जिते ।
न्युब्जं कर्मबद्धकाले न्युब्जोऽधोमुखकुब्जयोः ॥ १२ ॥
नाभीलं मेखलाबन्धे वरस्त्रीरक्षणेऽपि च ।
नियामकः पोतवाहे दृश्यते च नियन्तरि ॥ १३ ॥
नन्द्यावर्तो गेहैभेदे तथा उपरि[तगर]पादपे ।
स्यान्नागराजिको राजहस्तिप्रासगणस्थयोः ॥ १४ ॥
नैक्षत्रं मेघशीतांशौ रेवत्यामपि दृश्यते ।
निष्ठा नाशेऽन्तनिष्पत्त्योर्याच्ञानिर्वाहयोरपि ॥ १५ ॥
नासाद्वारोऽर्द्धकाष्ठे स्यान्नासिकायां च कीर्तिता ।
न्यूङ्खः सामवेदोङ्कारषट्के चात्यन्तसुन्दरे ॥ १६ ॥
निर्याणं हस्तिनेत्रान्ते निर्गमे मरणे तथा ।
नितम्बः स्त्रीकटीपश्चाद्देशे योषित्कटावपि ॥ १७ ॥
निह्नुतः स्याद्विप्रलब्धे तथा विप्रकृतेऽपि च ।
निरस्तं तु विरामे स्यात् तथा त्वैरितभाषिते ॥ १८ ॥
नाभिः प्राण्यङ्गचक्रान्तक्षैत्रियेषु नृपोत्तमे ।
स्यान्निस्तरणमुपाये तरणेऽपि प्रयुज्यते ॥ १९ ॥

१. IO[1] वै शुद्धौ.
२. IO[2] गृहे.
३. IO[1] नक्षत्री.
४. R reads this ardha thus:— निष्ठा काले प्रकर्षे च मर्यादायां दिशि स्मृता p. 682.
५. IO[1] and IO[2] add च This letter is omitted in R. p. 185.
६. IO[2] दुरित.
७. IO[2] क्षेत्रियेषु.

निराकृतिर्निवाकारे[तिरनध्याये] प्रत्यादेशेऽथ निर्जये ।
नाडी देहशिरायां स्यान्नालकालप्रभेदयोः ॥ २० ॥

भवेन्निरसनं घाते क्षेपणेऽपि प्रयुज्यते ।
निकारः स्यात्परिभवे धान्यस्योत्क्षेपणे तथा ॥ २१ ॥

नियमो यन्त्रणायां तु व्रते संविदि निश्चये ।
निषधो देशेऽद्रिभेदे कठिने निषधाधिपे ॥ २२ ॥

निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने ।
न्यग्रोधस्तु वटे व्यासे न्यग्रोध्योषधिकान्तरे ॥ २३ ॥

निगद्यते निशमनमालोकने श्रुतावपि ।
निरूपणं विचारे तु दर्शनेऽपि प्रकीर्तितम् ॥ २४ ॥

नैगमः पौरवणिजे नग्नः क्षपणबन्दिनोः ।
नीलकण्ठः शिखिन्युग्रे नरेन्द्रो वार्तिके नृपे ॥ २५ ॥

निदेशः परिसंवादे निन्दापवादकुत्सयोः ।
निर्ग्रन्थः क्षपणे निःस्वे निःश्रेयसं शिवेऽमृते ॥ २६ ॥

नरः पार्थे मनुष्येषु[च] नालीकश्चाब्जबाणयोः ।
निसर्गश्च स्वभावेऽपि सृष्टानीकृशानु[सृष्टौ नीकाश]शोकयोः ॥ २७ ॥

निदाघः स्वेदोष्णोष्मेषु निग्रहो भर्त्सनेऽवधौ ।
निजं नित्ये तथात्मीये निशान्तं गृहशान्तयोः ॥ २८ ॥

निर्यतिः संयमे दैवे निबोधो बोधनाशयोः ।
निर्गुण्डीन्द्राणीशेफाल्योर्निस्त्रिंशः प्लवखड्गयोः ॥ २९ ॥

निह्नुतिस्तु शठे शाठ्ये निधनं वंशनाशयोः ।
निमित्तं कारणे चिह्ने न्यक्षं कार्त्स्न्यनिकृष्टयोः ॥ ३० ॥

१. IO[2] omits this ardha.

निषङ्गः सङ्गतौ तूणे निपाकः खेदपाकयोः ।
नलिनी पद्माकरेऽब्जे नैतं बन्धनभुग्नयोः ॥ ३१ ॥

निभो व्याजे समाने च नगः पर्वतवृक्षयोः ।
नाम प्राकाश्यसंभाव्यकुत्सासु स्वीकृतेऽव्ययम् ॥ ३२ ॥

ननु प्रश्नेऽप्यनुज्ञायां संबुद्धाववधारणे ।
नु पृच्छायां विकल्पे नु नूनं निश्चिततर्कयोः ॥
नानोभयस्मिन्नेकत्र निर्निश्चयनिषेधयोः[3] ॥ ३३ ॥

॥ इति नकारः ॥



१. IO[1] adds च.
२. IO[1] उभय....नेकनिर्निश्चय.
३. R adds in this section:—
नीकाशो विजने स्फुटे p. 769.

## [ पकारः ]

प्रत्ययः शपथे हेतौ ज्ञानाधीनगमादिषु ।
प्रथितत्वे च विश्वासे प्रख्याते परिकीर्तितः ॥ १ ॥

पद्मोऽम्बुजे च संख्याने नागे ना च प्रकीर्तितः ।
पद्मं[1] द्विरदबृन्दौ च पद्मा भोगेश्रियोरपि ॥ २ ॥

परिग्रहः कलत्रे[2] च मूलस्वीकारयोरपि ।
शपथे परिवारे च राहु[3]वक्त्रस्थभास्करे ॥ ३ ॥

पदं[4] भवेत् परित्राणे व्यवसायां[साये] च कीर्तितम् ।
वाक्ये वस्तुनि शब्दे च पताके[5]श्चिह्नलक्षणम् ॥ ४ ॥

प्लवो भेके कूपे भेले गोर्नर्दे[6] श्वपचे प्लुतौ ।
प्लवं निम्नमहीभागे पक्षिभेदे जनोत्तरे ॥ ५ ॥

भवेत्परिकरो वृन्दे परिवारविवेकयोः ।
प्रारम्भ[7]गात्रिकाबन्धपर्यङ्केषु परिच्छदे ॥ ६ ॥

प्रसवः शाखिनां पुष्पे फलेऽथ गर्भमोचने ।
परम्परा प्रसङ्गे च जननापत्ययोरपि ॥ ७ ॥

पणो विक्रय्यशाकादिमुष्टौ द्यूते भृतौ ग्रहे ।
व्यवहारे पुराणेऽर्थे मूल्ये गण्डकविंशतौ ॥ ८ ॥

१. IO[2] भाद्री.
२. R. कलत्रेऽपि.
३. R. राहुग्रस्ते च.
४. Sarvānanda on Amara III-iii-91 reads thus:—पदं स्थाने परित्राणे व्यवसायोपदेशयोः
५. IO[1] निपाक; IO[2] पाद्त; IO[1] पताक...व्याघ्रभेदे in verses ४-११ is written after आद्यो-पलबधायेष्टौ in verse १८
६. IO[1] भेगोनर्द्दौ.
७. Sarvānanda III-iii-163. आरम्भ.

पक्षः सख्यौ बले साध्ये करिपार्श्वविरोधयोः ।
गरुत्सहाययोश्चुल्लीरन्ध्रे केशात्परे चये ॥ ९ ॥

प्रतिग्रहः क्रियाकारे सैन्यपृष्ठे पतद्ग्रहे ।
द्विजदेयग्रहे तस्य स्वीकारे च प्रयुज्यते ॥ १० ॥

पुण्डरीकं सितच्छत्रे सिताम्भोजे च कीर्तितम् ।
पुण्डरीको व्याघ्रभेदे दिग्गजेक्षुप्रभेदयोः ॥ ११ ॥

पुष्करं हस्तिहस्ताग्रे तीर्थभेषजभेदयोः ।
व्योम्नि खङ्गफले पद्मे तूर्यवक्त्रे जलेऽपि च ॥ १२ ॥

[1]स्वभावे पङ्कजे चैव पौरामात्यादियोनिषु ।
सत्त्वरजस्तमःसाम्ये प्रत्ययात्प्रथमे तथा ॥ १३ ॥

[2]पूर्णालकं पूर्णपात्रं वलयस्वीयै[3]कज्जितम् [बलेन स्वीयकं कृतम्] ।
यत्र तत्र यथासंख्यं पूर्ण[4] पटहपात्रयोः ॥ १४ ॥

प्राक् प्रत्यग् द्वितयं देशे दिशि कालेऽव्ययं स्मृतम् ।
प्राच्ये चैव प्रतीच्ये च वर्तमाने त्वनव्ययम् ॥ १५ ॥

[4]पादोऽङ्घ्रौ च[5] तुरीयांशे गिरेः प्रत्यन्तपर्वते ।
दीधितौ तरुमूले च[6] पुराख्या गुग्गुलौ पुरि ॥ १६ ॥

पौरुषेयं भवेत्कार्ये पादान्तरेष्वपि क्वचित् ।
[7]प्रदोषोऽपि निशाद्यायां [8]कदाचिद्रात्रिमात्रके ॥ १७ ॥

१. These meanings seem to be those of the word प्रकृति. But none of the two mss. show any indication of an omission here; but it is likely that there was an ardha beginning with प्रकृति.

२. पूर्णानकं is the reading in the majority of other lexicons; पूर्णालकं may be due to a corruption in the Bengali script; Apte notes the latter reading as a variant in his dictionary.

३. IO¹. स्वीफयजितम्.

४. IO¹. पदः

५. IO² omits च.

६. IO¹ omits च.

७. IO². प्रदोषो दोषकालायां.

८. IO² omits this pāda.

प्रभवो जन्महेतौ स्यात् पयोमूले पराक्रमे ।
आद्योपलब्धायेष्टौ पैचनं पाकडिम्बयोः ॥ १८ ॥

पक्ष्म सूत्रे च सूक्ष्मांशे नेत्रलोमनि वर्तते ।
दृष्टं पुष्पच्छदे चापि प्रतिघा रोषघातयोः ॥ १९ ॥

प्रग्रहो भासि योक्त्रे च वन्द्यां च नियमे तथा ।
तुलासूत्रे सुवर्णालौ प्रतीकोऽङ्गप्रतीकयोः ॥ २० ॥

भवेत्प्रतिसरः सूत्रे व्रणशुद्धौ चमूकटौ ।
मण्डलारक्षयोः प्रैष्ये प्रकाशः स्फुटरोचिषोः ॥ २१ ॥

प्रमाणं कारणे माने शास्त्रे सम्यक्प्रवक्तरि ।
मर्यादायां तथा नित्ये पर्णाख्या किंशुके दले ॥ २२ ॥

पैालिः कर्णलतायां स्यात् प्रदेशे पङ्क्तिचिह्नयोः ।
दृष्टं श्वश्रु[दृष्टश्मश्रु]स्त्रियामस्रौ पर्यायेऽवसरे क्रमे ॥ २३ ॥

पर्व प्रतिपत्पक्षान्तसन्धौ विषुवदादिके ।
ग्रन्थिप्रस्तावयोश्चापि प्रीतिः प्रेमप्रमोदयोः ॥ २४ ॥

कुरङ्गे च प्रपौत्रे च तनयेऽपि निगद्यते ।
पैरम्परा सन्तानेऽपि पङ्कः पापे च कर्दमे ॥ २५ ॥

पाशः कर्णादिहेम्नि स्यात् समूहे केशपूर्वकः ।
खगादिबन्धने चापि प्रसूनं कुसुमे फले ॥ २६ ॥

परागः पुष्परेणौ स्यात् पानीयरजसोरपि ।
प्रतीतः प्रथितो दृष्टो हृष्टज्ञानमनीषिषु ॥ २७ ॥

१. See footnote 5 on page 56.

२. IO[1]. प्रमाणं च लतायां.
IO[2].....च लतायां.
The reading adopted above is based on Bhānuji on Amara III-iii-197.

३. Though the mss. show no indication there seems to be some omission here.

४. There is a mistake here also, for only one meaning is given for the word परम्परा.

५. IO[1]. कणादि.

पौरुषं नृभुजोन्माने पुंसो भावे च कर्मणि ।
परिवेषो रवेर्बिम्बे मण्डले[बिम्बमण्डले] वेष्टने तथा ॥ २८ ॥

पिप्पल्याख्या [1]वृक्षभेदे वस्त्रच्छेदविशेषयोः ।
प्रकरः [2]स्तबकपुष्पादौ [स्तबके पुष्पे] समूहेऽपि प्रयुज्यते ॥ २९ ॥

पार्ष्णिरुन्मत्तयोषायां सैन्यपृष्ठाङ्घ्रिमूलयोः ।
पिनाकः स्याद्रजोवर्षे शंभोर्धन्वनि शूलके ॥ ३० ॥

पाचनो रन्धनद्रव्ये पाचनं पचने मतम् ।
पातिनी रन्धनस्थाल्यां वागुरायामपि क्वचित् ॥ ३१ ॥

पतङ्गः शलभे सूर्ये शालिभेदे च पक्षिणि ।
प्रसूतिः प्रसूते पुत्रे तनयायामपि स्मृता ॥ ३२ ॥

पवनं कुम्भकृत्पाकस्थाने स्यात्पवनोऽनिले ।
पक्षतिस्तु गरुन्मूले तथा प्रतिपदि स्मृता ॥ ३३ ॥

पर्याप्तं यथेष्टे शक्ते तृप्तौ निवारणे तथा ।
पटुस्तीक्ष्णे स्फुटे दक्षे पटोले निष्ठुरारुजोः ॥ ३४ ॥

परीष्टिः परिचर्यायां दृश्यते च गवेक्षणे ।
प्रदरो रोगभेदे स्याद्विदारे बाणभङ्गयोः ॥ ३५ ॥

[3]पुलाकस्तु[4]च्छधान्ये स्यात् संक्षेपे भक्तिसिक्थके[सक्थके] ।
[5]पुलकिं चित्तवृत्ते च[?]पिशिते [6]कर्दमान्तरे ॥ ३६ ॥

परिवारः परिजने दृष्टः खड्गपिधानके ।
पक्वो विनाशेऽभिमुखे जने परिणते [7]तथा ॥ ३७ ॥

१. IO[2] omits वृक्षभेदे.
२. IO[2]. स्तत्पुत्रादौ.
३. IO[2]. पुलीकः.
४. IO[2]. तुष.
५. IO[2]. पुलाकचित्त.
६. IO[2] adds प्रसिते च नराकृतौ.
७. IO[1]. Space is left out for writing तथा.

पक्षचर एकचरे यूथभ्रष्टे विहङ्गमे ।
पादपः पादपीठेऽपि तरौ पादरथे तथा ॥ ३८ ॥

पीलुः पुष्पे गजे वृक्षे काण्डे तालास्थिखण्डके ।
प्रेतः[1] परेते नामृते तथा[2] भूतान्तरेऽपि च ॥ ३९ ॥

प्रतिश्रयः सभायां स्यादाश्रये मन्दिरेऽपि च ।
पिण्ड[3]माजीवने देवे निवापे गोलके तथा ॥ ४० ॥

प्रायो मरणबाहुल्यतुल्येष्वनशनेऽपि च ।
परीवापो[4] जनस्थाने स्थाप्ये बीजे परिच्छदे ॥ ४१ ॥

पल्लवो विस्तरे[विटपे] षिद्गे पात्रे किसलये तथा ।
परिघो मुद्गरेऽस्त्रे च कथ्यते शूलघातयोः ॥ ४२ ॥

पुरस्कृतोऽभिशस्ते च पूजिते चाग्रतः कृते ।
प्रसिद्धः प्रजवख्यातकृतप्रसाधनेषु च ॥ ४३ ॥

प्रणीतः संस्कृताग्नौ स्याद्विहितेऽपि प्रवेशिते ।
पुलकः कृमिरोमाश्वप्रस्तरेषु प्रयुज्यते ॥ ४४ ॥

पटल[5]ध्वनिः पिटके नेत्ररोगसमूहयोः ।
प्रियकः कदम्बफल्यां पीतशाले मृगान्तरे ॥ ४५ ॥

प्रकाण्डो विटपे शास्त्रे तरुशाखाशिफान्तरे ।
पृषच्च पृषतो बिन्दौ प्रायश्चित्ते[6] प्रयुज्यते ॥ ४६ ॥

१. IO[2] adds **सह.**

२. IO[1] and IO[2] omit **तथा.**

३. IO[2] omits this and the next ardha. The reading adopted in the text is based on R. p. 724.

४. IO[1] and IO[2] read **परिवापो जनस्थाने स्थाप्यजीने परिच्छदे.**

५. IO[2]. This and the following three ardhas are omitted.

६. IO[1] adds **कुतरि** but is an obvious mistake.

प्रवणं क्रमनिम्ने च प्रह्वे चतुष्पथेऽपि च ।
प्रकोष्ठः कूर्परान्नीचे कक्षायामपि दृश्यते ॥ ४७ ॥

प्रघनोऽपि बहिर्द्वारेऽलिन्दके लोहमुद्गरे ।
पाटला गवि पुष्पे च पाटलो व्रीहिवर्णयोः ॥ ४८ ॥

परिभाषणं च नियमे निन्दोपालम्भवाक्ययोः ।
प्रतिग्राहः[प्रग्राहस्तु] तुलासूत्रे रश्मावपि च वाजिनाम् ॥ ४९ ॥

पेचकः करिलाङ्गूलमूलकौशिकयोरपि ।
प्रतियत्नस्तु संस्कारे तथोपग्रहलिप्सयोः ॥ ५० ॥

पत्तिः सैन्यप्रभेदे स्यात् पदातौ गमने तथा ।
प्रणयः प्रेमविश्रम्भयाचनासु प्रकीर्तितः ॥ ५१ ॥

प्रथमं प्रमुखं चादौ प्रधाने परिकीर्तितम् ।[1]
पारायणं भवेत् कार्त्स्न्ये समासङ्गेऽपि कीर्तितम् ॥ ५२ ॥

परिबर्हो नृपार्हे स्यात् दृश्यते च परिच्छदे ।
पार्श्वं चावयवे जन्तोर्वक्रोपाये च कीर्तितम् ॥ ५३ ॥

पराख्या केवले श्रेष्ठे रिपौ योग्ये स्वतोऽन्यतः ।
भवेत्प्रतिकृतिः ख्यातौ प्रतिमाप्रतिकारयोः ॥ ५४ ॥

अस्ति प्रतिहतो द्विष्टपुच्छि[प्रति]स्खलितयोरपि ।
भवेत्पिप्पलकं स्यूतिसूत्रे च स्तनचूचके ॥ ५५ ॥

पलाशाख्या हरिद्राक्षषटीषु [हरिद्रक्षःशटीषु] किंशुके कुले [दले] ।
भवेत्प्रणिहितं प्राप्ते न्यस्ते चापि ससंभृते ॥ ५६ ॥

प्लवङ्गमः प्लवङ्गश्च मतौ वानरभेकयोः ।
परमं स्वीकरेऽसंख्यं परमस्तु परेऽपि च ॥ ५७ ॥

1. Bhānuji on Amara II-vii-22 reads this ardha thus :—
प्रथमप्रमुखे चोभे प्रधाने च प्रकीर्तिते.

प्रतिमानं प्रतिमेभदन्तद्वितयमध्ययोः ।
भवेत्प्रवचनीयाख्या प्रवाक्ये च प्रवक्तरि ॥ ५८ ॥

प्रासादो विबुधावासे निवासे च महीभुजाम् ।
भवेत्प्रवचवीदस्तु[वचनं वेदे]कल्याणभाषिते मतैः ॥ ५९ ॥

पिण्याकः सिल्हके दृष्टस्तिलकल्के च कुत्रचित् ।
पराक्रमः समुद्योगे प्राणमात्रे च दृश्यते ॥ ६० ॥

पराभवः परिभवे नाशेऽपि परिकीर्तितः ।
प्रलयो मृत्युसंवर्तमूर्च्छासु परिकीर्तितः ॥ ६१ ॥

प्रणाय्यो लोभनिर्मुक्ते स्यादसम्मत एव च ।
भवेत्परिमलः ख्यातौ गन्धे जनमनोहरे ॥ ६२ ॥

प्रतिष्कषः सहाये च वार्ताहारे पुरोगमे ।
पिच्छैलः[पित्सन्]पिपतिषन्नेतौ पतनेच्छुविहङ्गयोः ॥ ६३ ॥

पूर्वस्तु पूर्वपुरुषपुरस्तादग्रजेष्वैपि ।
पिशुना मैता स्पृक्कायां पिशुनः सूचके खले ॥ ६४ ॥

पुरस्तु गुग्गुलौ दृष्टः पुरं पूर्देहरश्मिषु ।
पवित्रं यज्ञोपवीते कुशे पूते च दृश्यते ॥ ६५ ॥

प्रतिपादनं प्रतिपन्ने पिटो रोमपटे मृगे ।
पतिः प्रभौ गतौ मूले पारावतः खेंगे मृगे ॥ ६६ ॥

पुष्टो रोमणि पाषाणे पामरः खलनीचयोः ।
पारदः क्षपणीगुर्वोः पार्थिवो भुवने नृपे ॥ ६७ ॥

१. IO[2]. वादस्तथा.
२. IO[2] omits मतः
३. IO[2]. पिचमलः
४. IO[1] adds दृश्यते.
५. IO[2]. मृता.
६. IO[2]. खले.

प्रवेणी तु कुथे वेण्यां पुद्गलश्चात्मदेहयोः ।
प्रगाढं तु द्वैये[दृढे] कृत्स्ने[कृच्छ्रे] प्रवापो देहवेश्मनोः ॥ ६८ ॥

प्लक्षो जट्यां गर्दभाण्डे पोतः शिशुवहित्रयोः ।
पद्धतिः पथि पङ्क्तौ स्यात् पूर्वश्चै खण्डसाध्ययोः ॥ ६९ ॥

प्रतिष्ठा यशसि स्थाने पत्री श्येने खगे शरे ।
प्राणो वायौ वने जीवे पुङ्गवो वृषभे वरे ॥ ७० ॥

प्रज्ञः प्राज्ञे स्त्रियां बुद्धौ पिण्डितं गलिते घने ।
पृथग्जनोऽधमे मूर्खे पृथुकश्चिपिटेऽर्भके ॥ ७१ ॥

पुरुषो नाथतुङ्गेषु पटः प्रियालवस्त्रयोः ।
पयोधरः स्त्रीस्तनेऽब्दे पयः क्षीरे तथाम्भसि ॥ ७२ ॥

प्रयोजनं योगहेत्वोः प्रेम स्निग्धत्वनर्मणोः ।
पङ्क्तिः स्यात् गौरवे पाके प्रतिपत्तिथिसंविदोः ॥ ७३ ॥

प्रतीहारो द्वाःस्थद्वारोः प्रेक्षाधीनृत्यदर्शयोः ।
प्रस्थः सानुनि माने च प्रततिस्ततिवीरुधोः ॥ ७४ ॥

पत्रं पक्षे दले युग्ये प्रार्थितं याचिते हते ।
प्रपञ्चो विस्तरे दम्भे पातालं क्ष्मातलौर्वयोः ॥ ७५ ॥

प्रकारो भेदसदृशोः प्रियङ्गुः कङ्कुवृक्षयोः ।
प्रभूतः क्षुण्णे व्युत्पन्ने प्राप्तिर्लाभे तथोदये ॥ ७६ ॥

प्रविदारणं भिदाज्योः पीतिः पानतुरङ्गयोः ।
प्रज्ञानं धीलक्षणयोः पूगः क्रमुकवृन्दयोः ॥ ७७ ॥

प्रवृत्तिर्वृत्तौ वार्तायां पुरुषो मनुजात्मनोः ।
पुष्पं प्रसूनरजसोः पेशलश्चारुदक्षयोः ॥ ७८ ॥

१. IO[1]. प्रविणे.
२. IO[2]. पूर्व स्यात.
३. IO[2]. प्रार्थिते.

प्रोक्षणं तु वधे सेके प्रैष्यः¹ प्रेषणपीडयोः ।
प्रसूरश्व जनन्योश्च प्रणिधिः प्रार्थने चरे ॥ ७९ ॥

प्रश्रयः प्रणये वेगे प्राप्तौ लब्धे जले कुशे ।
पिचिण्डः कुक्षौ पश्वङ्गे पौत्रं कौलाहलास्ययोः ॥ ८० ॥

पिल्लः क्लिन्नदृक्क्लिन्नाक्ष्णोः पुष्यो मासभयोः स्मृतः² ।
पलं माने च मांसे च पलाशी राक्षसे द्रुमे³ ॥ ८१ ॥

प्लक्षः पिप्पलपर्कट्योः पार्थिवो भूभवे नृपे ।
प्राप्तरूपोऽभिरूपे च पल्लिर्ग्रामनिवासयोः ॥ ८२ ॥

पर्युपोपर्युपर्यन्तः पूजा संमानलोकयोः ।
प्रत्याभिमुख्ये वीप्सायां लक्षणप्रतिदानयोः ॥ ८३ ॥

उग्रे हृतस्य [इतिवृत्तस्य] चाख्याने मात्रार्ये तुल्यभागयोः ।
पुरा प्रबन्धनिकटचिरन्तनेष्वनागते ॥ ८४ ॥

पूर्वेद्युः पूर्वदिवसप्रत्यूषयोरुदाहृतम् ।
पुरस्तात्प्रथमे प्राच्यां पुरार्थे च पुरस्तथा ॥ ८५ ॥

पुनरप्रथमे भेदे प्राक् तुल्येऽन्तरपूर्वयोः ।
पश्चात्प्रतीच्यां चरमे प्रादुः स्फुटे च संभवे⁴ ॥ ८६ ॥

॥ इति पकारः ॥



१. Sarvānanda on Amara III-iii-217. प्रैषः

२. IO². मासततौ कलौ.

३. IO². राक्षसीद्रुमे.

४. The following additional lines are found attributed to Ajaya in R. [पाकः] भवेदर्जुननामायम् p. 228. पुष्पकं कुसुमाञ्जनम् p. 567. प्रधानं प्रकृतौ श्रेष्ठे महामात्रस्वबुद्धिषु p. 721. प्रहरो रोगभेदे स्यात् विदारे शरभाङ्गयोः p. 744. पत्रं तु वाहने पर्णे स्यात्पक्षे शरपक्षिणोः p. 751.

## [फकारः]

फलं लाभे फलोऽस्त्राङ्गे व्युष्टौ हेतूत्थसंपदोः ।
फली च फलके वृक्षे प्रियङ्गुमत्स्यभेदयोः ॥ १ ॥

फेनिलः फेनसंयुक्ते बदराविष्टयोरपि ।
फालः स्यात् कृषके फाले फल्गु मल्पवसारयोः ॥ २ ॥

॥ इति फकारः ॥



1. Sarvānanda II-ix-13 reads :—फलं लाभे फलेऽस्त्राङ्गे व्युष्टौ हेतुसमुत्थे स्यात्. R reads फलकाङ्के भवेऽस्त्याङ्गे p.228.

## [बकारः]

बलो रामेऽसुरे काके बला वाट्यालके बलम् ।
स्थौल्ये शक्तौ तथा रूपे पूतनायां बलान्विते ॥ १ ॥

बहुलः कृष्णपक्षेऽग्नौ मेचके बहुलं द्वयोः ।
बहुला त्रुटिमाहेयीकृत्तिकासु प्रकीर्तिता ॥ २ ॥

बलिः करे दैत्यभेदे पूजायां गृहदारुणि ।
जठरावयवे चापि जराशिथिलचर्मणि ॥ ३ ॥

बालिका वालुकायां[1] तु कुमार्यां कर्णभूषणे ।
बालकं कटके दृष्टमङ्गुलीयेऽपि कुत्रचित् ॥ ४ ॥

बृत्तं छन्दसि बृत्तौ च निस्तलातीतयोरपि ।
दृढाधीतचरित्रेषु बल्लभोऽध्यक्षकान्तयोः ॥ ५ ॥

बडवा कुम्भदास्यां स्यादश्वायां योषिदन्तरे ।
बारवानिर्धर्माध्यक्षे भवेत्[2]संवत्सरे क्वचित् ॥ ६ ॥

बाहुजः क्षत्रिये दृष्टो गृहाशक्तशुके क्वचित् ।
बभ्रुः स्यान्नकुले पिङ्गे विपुले गरुडध्वजे ॥ ७ ॥

बैलजाख्या[3] क्षेत्रे मत्स्ये[4] पुरद्वारस्त्रियोर्मता ।
बन्धुलं बन्धुली नम्रे सुन्दरेऽपि प्रयुज्यते ॥ ८ ॥

बौलिनी[5] तु विदग्धायां नर्तकीमत्तयोषितोः ।
बिटपः पल्लवस्तम्बशाखासु विटनायके ॥ ९ ॥

१. IO[1]. वाह्लिकायां.
२. IO[2]. वत्सरेऽपि दृश्यते.
३. IO[2]. बल्लजाख्या.
४. IO[1] adds च.
५. IO[2]. वाणिनी.

बालो डिम्बार्भकेशेषु ह्रीबेरे श्वेतबालधौ ।
बाणो दानवभेदे तु शरे बाणं फलेऽपि च ॥ १० ॥

बलाकले विह्वले च मर्यादाम्बुविकारयोः ।
बृहती क्षुद्रवार्ताकीछन्दःक्षुद्राम्बरादिषु ॥ ११ ॥

बत्सं वक्षसि बत्सस्तु तन्तुशब्दसुतादिषु ।
बीभत्सो विकृते पापे क्रूरे पापित्रृणात्मनोः ॥ १२ ॥

बराटकः सरोजस्य बीजकोषे कपर्दके ।
ब्रह्म वेदात्मतपःसु ब्रह्मा विप्रे प्रजापतौ ॥ १३ ॥

द्वादशाङ्गुले बितस्तिः स्यात् प्रशान्तेऽङ्कुशकर्मणि ।
बैल्गुकं रुचिरे दृष्टं चन्दने विपिने पणे ॥ १४ ॥

ब्राह्मण्यं ब्रह्मणो भावे ब्रह्मविद्वेदवेत्तरि ।
मुखे चाभ्यवहारे च विप्रे च भाषितात्तयोः ॥ १५ ॥

॥ इति बकारः ॥



१. IO[2] omits this pāda.

२. IO[2] omits this pāda but adds :—तौ ह पादं तवागंद्रयां योषितोच्यते.

३. Both Sarvānanda and Bhānuji read पार्थ under III-iii-232 and 234 respectively. R. reads पात्रे.

४. IO[2]. बलकं ध्वनिरुद्दिष्टः.

५. IO[2]. कर्मवृत्तिवान्.

## [भकार:]

भाण्डं मूलधने पात्रे भैण्डवृत्तौ प्रकीर्तितम् ।
भिन्नं विदारिते दृष्टं व्यतिरिक्ते च मिश्रिते ॥ १ ॥

भुजिष्यः स्यादनायत्ते प्रेष्ये च हस्तघातयोः ।
भङ्गा गणशतने[क्षणतृणे] भङ्गो भेदे वीचौ पराजये ॥ २ ॥

भैारः सहस्रद्वितये पलानां चापि वीवधे ।
भूजम्बूरपि गोधूमे वैकङ्कतफले तथा ॥ ३ ॥

भण्डनं कवचे युद्धे खलीकारे च दृश्यते ।
भेदो विदारणे दृष्ट उपजापविशेषयोः ॥ ४ ॥

भिक्षा सेवाप्रार्थनयोर्भृतौ भिक्षितवस्तुनि ।
भृङ्गमुक्तादिभृङ्गाश्च धूम्याटे षट्पदेऽपि च ॥ ५ ॥

भागधेयः करे भाग्ये दायादेऽपि च दृश्यते ।
भैवो भद्राप्तिसत्तासु शिवसंस्कारजन्मसु ॥ ६ ॥

भोगवती तु नागानां नगर्यां च प्रकीर्तिता ।
रास्नायां भद्रवर्षे तु समाधौ च गजे शुभे ॥ ७ ॥

भूयोऽव्ययं पुनरर्थे भूयान् बहुतरे मतः ।
भव्यं योग्ये च कल्याणे भाविन्यपि श्रुतं क्वचित् ॥ ८ ॥

भङ्गः पराजये दम्भे गमने जलनिर्गमे ।
भीमो वृकोदरे शंभौ दृश्यते च भयानके ॥ ९ ॥

१. IO². वाजि दूषयोः.

२. IO². भावः सहाये द्वितीये च.

३. IO². भावः सहये द्वितये.

The reading given above is based on Bhānuji II-ix-87.

R. भवो रुद्रे च सभासु p. 73.

भवेद् भोगवती गौर्यां भगवान् [1]बुद्धपूज्ययोः ।
[2]भूतिकं भूमिनिम्बे च यवान्यं च तृणे तथा ॥ १० ॥

भुवनं पिष्टपे तोये भ्रूणः स्त्रीगर्भपोतयोः ।
भेलो दिवाकरे चन्द्रे भुजङ्गः सिद्धसर्पयोः ॥ ११ ॥

भ्रातृव्यो भ्रातृजे शत्रौ भ्रमरोऽलिनि कामुके ।
भूतात्मा तु विधौ देहे भक्तिर्भावे च सेवने ॥ १२ ॥

भूमिर्भूश्च क्षितौ स्थाने भवोऽतिशयभावयोः ।
भीरुः[3] शतावरी [4]भीते भानुर्दिनकरे त्विषि[5] ॥ १३ ॥

भागो भाग्य एकदेशे भेलः पत्रे च भीरुके ।
भित्तिः कुड्ये प्रदोषे च भूतिर्भस्मनि संपदि ॥ १४ ॥

भरणं वेतने भृत्ये भूभृद्भूपालशैलयोः ।
भूमिस्पृग्वैश्यनरयोर्भर्ता स्वामिनि धारके ॥
[6]भूरि प्राये सुवर्णे च भर्म चामीकरे भृतौ ॥ १५ ॥

॥ इति भकारः ॥



१. IO². बृद्धपूज्ययोः.
२. IO². भूतिकं भूनिम्बे च प्रोक्तं.
३. Sarvānanda on Amara II-vi-3 reads भीरुः स्यात् कातरे नार्यां.
४. IO² omits भीते.
५. IO². द्विषि.
६. R. भूरि प्रभूते कनके p. 561.

## [मकारः]

मध्यमा स्याद्दृष्टरजोनार्यां मध्याङ्गुलेऽपि च ।
मध्यमो हेतुमध्ये तु मध्यमाङ्गुलिगह्वरे ॥ १ ॥

मात्रा परिच्छदे माने स्तोके कर्णविभूषणे ।
अक्षरावयवे दध्ये[द्रव्ये] [1]यात्रांशे कालभेदके ॥ २ ॥

मण्डलं ग्रामसन्दोहे प्रविधौ प्रतिबिम्बके ।
वृन्दे शुनि मृगे चापि बिम्बे द्वादशराजके ॥ ३ ॥

महावीरो मृगेन्द्रेऽपि तार्क्ष्ये शूरे मखाग्निषु ।
[2]सुभटे वन्दिवरयोः श्वेताश्वे प्रवरे खगे ॥ ४ ॥

मत्सरः कृपणाढ्ये स्यात् परमे द्रोहकारिणि ।
महामुनिः कृपे काले मन्युर्दैन्ये क्रतौ क्रुधि ॥ ५ ॥

मधुर्दैत्यान्तरे चैत्रे मधुके सुरभौ मधु ।
क्षौद्रे पुष्परसे मद्ये मह उत्सवतेजसोः ॥ ६ ॥

मन्दो मूढे च रोगार्ते स्वैरे भाग्ये शनैश्चरे ।
प्रलये द्विपभेदे च मरुः शैले च धन्वनि ॥ ७ ॥

मणिर्दोले च मेढ्राग्रे रत्ने चाजागलस्तने ।
मल्लिर्मत्स्यविशेषे च करङ्के च कपालके ॥ ८ ॥

मूर्धाभिषिक्तो राजन्ये प्रधाने पृथिवीपतौ ।
मन्थरः सूचके मन्दे तथा वैशाखकोपयोः ॥ ९ ॥

महामात्रः समृद्धे तु हस्त्यारोहाधिपेऽपि च ।
[3]मौलिः संयतकेशे च चूडामुकुटयोरपि ॥ १० ॥

१. IO[1]. यात्रां काल.
IO[2] omits लभेदके.

२. IO[1]. स्वभटेरशयोश्च श्वेताश्वे.

३. R. मौलिः शिरः परिष्कारः किरीटं मुकुटं तथा p. 406.

माधवोऽपि[1] वसन्ते च राधेये दृश्यते तथा ।
मदनाख्या[2] स्मरे वृक्षे मधूच्छिष्टवसन्तयोः ॥ ११ ॥

मञ्जुलो रमणीये तु जलरङ्कविहङ्गमे ।
माणवको भवेद्बाले हारभेदे कुपूरुषे ॥ १२ ॥

मङ्गलं भविके दृष्टं तथा लब्धानुरक्षणे ।
महालयस्तु वीहारे वीक्षिते परमात्मनि ॥ १३ ॥

मागधी पिप्पलीशुण्ठ्योः वन्दियोषिति युज्यते ।
मृगः पशौ मार्गशीर्षे एणे यज्ञेभभेदयोः ॥ १४ ॥

मधुका मधुयष्टौ च मधुकः स्तुतिपाठके[3] ।
माता तु गवि रेवत्यां सेनानीपितृयोषितोः ॥ १५ ॥

मिथुनं यूथदम्पत्योः मिथुनो राशिभेदतः ।
मूलं निजे शिफायां स्यादृक्षभेदेऽपि सन्निधौ ॥ १६ ॥

मानं प्रसूतिप्रस्थादौ मानश्चित्तसमुन्नतौ[4] ।
मार्गो गवेषणे मासभेदे मृगपदाध्वनोः ॥ १७ ॥

भवेन्मदकलो मत्तद्विपे मदास्फुटोदिते ।
महासेनो बाहुलेये महासेनापतावपि ॥ १८ ॥

मेखला खड्गबन्धे स्यात् काञ्चीभूभृन्नितम्बयोः ।
मेचको विदितः कृष्णे बर्हिणां बर्हिचन्द्रके ॥ १९ ॥

महिषी कृताभिषेकराजस्त्रीमहिषस्त्रियोः ।
महाकालः स्यात्किंपाके शङ्करे च मखान्तरे ॥ २० ॥

१. IO[2]. माधवो वसन्ते राधे ज्ञेयाः ध्वर्यत्रिमूर्तिके.

२. IO[2]. मादनाख्या.

३. It is probable that the following ardha of Ajaya found in R. found a place here. क्षौरिकायां तु मधुका राजदानफले तथा p. 229.

४. Sarvānanda on Amara III-iii-197. मक्षत्रान्तिकयोरपि.

५. IO[1]. समुन्नतिः

मुखं मुख्ये च वक्त्रे स्यादादावुपाय एव च ।
मन्दारः पारिभद्रे[1] स्यात् देवद्रुमार्कपर्णयोः ॥ २१ ॥

श्लिष्टं मानेऽप्यविस्पष्टे मौःशब्दो[2] मासचन्द्रयोः ।
मिषी शतपुष्पयोः स्यात्[मिसिर्मोसीशतपुष्प्योः]मरुद्व्रातदिवौकसोः ॥२२॥

मर्यादा धारणासीम्नोः मातङ्गः श्वपचे द्विपे ।
मैथुनं रतिसङ्गे च मन्दिरं नगरे गृहे ॥ २३ ॥

मलयः शैलेऽप्यारामे[3] मूर्च्छितो मूढवृद्धयोः[4] ।
मूल्यं तु वेतने रम्ये मूर्तिः काठिन्यकाययोः ॥ २४ ॥

मृदुः स्यात् कोमलेऽतीक्ष्णे मृतं मृत्यौ च याचिते ।
मन्मथः कपिले कामे मार्गणो[5] याचके शरे ॥ २५ ॥

मोचा शाल्मलिकदल्योः[6] मधुरं स्वादुरम्ययोः ।
मण्डो रसाग्र एरण्डे मध्यं नाभ्यवलग्नयोः ॥ २६ ॥

मोहस्तन्त्र्यामविद्यायां मूढस्तु तन्द्रिते जडे ।
मतिरार्ये च शाके च मयूखः करकीलयोः ॥ २७ ॥

माल्यं पुष्पे पुष्पदाम्नि मुण्डो मूर्धनि मुण्डिते ।
मोदको हर्षके खाद्ये महद्राज्यविशालयोः ॥ २८ ॥

मकराङ्कः स्मरे सिन्धावव्ययं स्यादतः परम् ।
मिथस्त्वन्योन्यरहसोः मुहुः स्याच्च क्षणे क्षणे[7] ॥ २९ ॥

॥ इति मकारः ॥



१. IO[2] omits भद्रे.
२. IO. मासःशब्दो.
३. IO[1] adds च.
४. IO[2] adds मद्रो कुर्वावतः स्वमन्थः स्यात्पवद्स्तयोः.
५. IO[1]. मार्गणा
६. IO[1] adds च.
७. मुष्टिः स्त्रीपुंसयोरच्छी is an additional tag attributed to Ajaya in R. p. 397.

# [ यकारः ]

युतकं यौतके युक्ते चलनाग्रे च संशये ।
स्त्रीणां वस्त्रान्तरे चैव युगले वसनाञ्चले ॥ १ ॥

योगो ध्याने जैये लाभे युक्तौ विश्रब्धघातिनि ।
सङ्गे समुच्चये चापि युक्ते चैव गुरौ तथा ॥ २ ॥

योजनगन्धा तु वैदेहीकस्तूरीव्यासमातृषु ।
यातयामपदं जीर्णे परिभुक्तोज्झिते तथा ॥ ३ ॥

युगं युग्मे च सत्यादौ चतुर्हस्तरथाङ्गयोः ।
यमो नित्यशरीरार्थकृते यमजकालयोः ॥ ४ ॥

यष्टिः शस्त्रे मधूयष्ट्यां योनिराकरगुह्ययोः ।
यादःपतिः पाशिन्यब्धौ युतं युक्ते तथा पृथक् ॥ ५ ॥

याजनं वर्तने क्षेपे यन्ता हस्तिपयूथयोः ।
यागार्हे याजनीये च ययुरश्वमखाश्वयोः ॥ ६ ॥

यतिः करे तापसे च यक्षः श्रीदेवगुह्यके ।
योगोऽभ्यासे योगोऽयं[6] यात्रा याचने च वर्तते[?] ॥ ७ ॥

यथाशब्दोऽव्ययं तुल्ये कथ्यते च निदर्शने ।
यावन्माने च साकल्ये सीमायां चावधारणे ॥ ८ ॥

॥ इति यकारः ॥



१. $IO^{2}$. जायौ.
२. $IO^{2}$. ब्ययोपासियायुम्येन्स्त.
३. $IO^{2}$. कृत्ये.
४. $IO^{2}$. यत्न.
५. $IO^{2}$. योग्या-
६. $IO^{2}$. योग्यः मूरे याने च,

*

# [रकारः]

रूपं श्लोके ग्रन्थावृत्तौ नाटकादिस्वभावयोः ।
चक्षुर्ग्राह्ये पशौ शब्दे बालके सुन्दराकृतौ ॥ १ ॥

रामो दाशरथौ चारौ जामदग्न्ये हलायुधे ।
पशुभेदे सिते श्यामे रामा योषिति दृश्यते ॥ २ ॥

रसो वीर्ये द्रवे रागे शृङ्गारादौ च पारदे ।
तिक्तादौ देहधौते च विषस्वादे रसा भुवि ॥ ३ ॥

रथ्या पथि प्रतोल्यां च रथानामपि संहतौ ।
रथ्यं स्वस्मिद्रथस्येव [स्वांशे रथस्यैव] रथ्यो रथस्य वोढरि ॥ ४ ॥

रेवटः शूकरे रेणौ वातूलविषवैद्ययोः ।
रेवटं दक्षिणावर्तशङ्खेऽपि परिकीर्तितम् ॥ ५ ॥

रजतं धवले रूप्ये शोणिताद्दहारयोः ।
रोहितो लोहिते मत्स्यभेदेऽव्यक्तेन्द्रचापयोः ॥ ६ ॥

रङ्गो युद्धे विरागे च खले रङ्गं त्रपुण्यपि ।
राका निशाकरे पूर्णे वीक्षितार्तवकन्ययोः ॥ ७ ॥

रुचिर्भास्यनुरागे स्यादतिष्वङ्गेऽपि कुत्रचित् ।
रागसूत्रं तुलासूत्रे पट्टसूत्रेऽपि संमतम् ॥ ८ ॥

राजा परिबृढे भूपे क्षत्रिये शशलाञ्छने ।
रजोऽयं[5] रजसा सार्धं स्त्रीपुष्पगुणधूलिषु ॥ ९ ॥

रोचना रक्तकल्हारे गोपिण्डे वरयोषिति ।
रङ्गमाता तु कुट्टिन्यां लक्षायामपि दृश्यते ॥ १० ॥

१. Bhānuji on Amara III-iii-79 रञ्जने.
२. IO². भेदाद्व्यक्ते.
३. IO². दर्शे
४. IO². पूर्णेन्दुपूर्णे या.
५. IO². रजापि,

रसः केशरे वकुले नागपुष्पे च वेधके ।
राजिका पङ्क्तौ [च] राज[१]सर्षपयोरपि दृश्य[२]ते ॥ ११ ॥

रसनं निस्व[३]ने स्वादे रशना काञ्चिजिह्व[४]योः ।
रीतिर्दुग्धसुवर्णादिमले स्यात् पित्तले स्थितौ ॥ १२ ॥

रौहिषो लोहिततृणे मृगमत्स्यविशेषयोः ।
राजी वीथ्यां मृगे मत्स्ये पङ्क्तौ राजोपजीविनि ॥ १३ ॥

रागः केशादिके रक्तमात्सर्यलोहितादिषु ।
रौहिणेयः प्रलम्बघ्ने तन्तुके चन्द्रनन्दने ॥ १४ ॥

रोषणो रोषणे हेमघर्षणाश्मनि पारदे ।
रेवती गवि नक्षत्रे बलभद्रस्य योषिति ॥ १५ ॥

रोदसी रोदसा सार्धं पृथ्[५]व्यां स्वर्गे दिवि क्षितौ ।
रतर्द्धिकं सुखस्नानदिनेऽष्टमङ्गले तथा ॥ १६ ॥

रूप्यं ताराहतं वर्णश्वेतयोः स्व[६]स्तिरूपके ।
रश्मिर्भासि च रज्जौ च राशिर्मेषादिपुञ्जयोः ॥ १७ ॥

र[७]थः स्यात्स्यन्दने नीरे रिष्टं स्यादशुभैनसोः ।
रुजा रोगे तथा भङ्गे रत्नं मणिप्रकोष्ठयोः ॥ १८ ॥

रम्भा कदल्यप्सरसो रणः संग्रामशब्दयोः ।
रहस्तु मैथुने गुह्ये रती रागस्मरस्त्रियोः ॥ १९ ॥

१. IO[1]. **वाज.**

२. IO[2] omits **दृश्यते.**

३. IO[1] and IO[2] **निस्वने.** The reading adopted above is found in Bhānuji on Amara II-vi-10 and R. p. 410.

४. R. **दामनि** p. 410.

५. Sarvānanda on Amara III-iii-227. **पृथ्वी स्वर्गे दिविक्षितावितौ.** R. on p. 778. **पृथ्वीस्वर्गौ विवक्षितौ.**

६. IO[2]. **स्वष्ट.**

७. IO[2]. **रथस्कन्दने वानीरे.** Bhānuji on Amara II-iv-30. **रथौ स्यन्दनवानीरौ.**

रैशब्दो विभवे हेम्नि रोदनं क्रन्दनाश्रुणोः ।
रोहिणी स्वरभावृक्षे राष्ट्रमुत्पातदेशयोः ॥ २० ॥

रदो दन्ते विलेखे च रभसो वेगहर्षयोः ।
रोकं रन्ध्रे रोको भासि रूक्षोऽस्निग्धे च[1] निष्ठुरे ॥

कुङ्कुमे चारुणो रक्तं रन्ध्रं दूषणगर्तयोः[2] ॥ २१ ॥
॥ इति रकारः ॥



१. IO[1] omits च.

२. The following verses are attributed to Ajaya but not found in either of the mss. consulted :—राजातनं प्रसवको राजादनमपीष्यते R. p. 220. राजादनः क्षीरिकायां. R. p. 229.

## [लकारः]

ललाम च ललामं च भूषावालधिवाजिषु[1] ।
चिह्ने स्वभावपुण्ड्रेषु प्रधाने ध्वजशृङ्गयोः ॥ १ ॥
लोचको मांसपिण्डे स्यात्[2] लीली रक्तांशुके तथा ।
भ्रुवोश्चर्मणि निर्बुद्धौ लीलः कङ्किनि चञ्चले ॥ २ ॥
लिङ्गं शेफसि चिह्ने च संख्योक्तप्रकृतावपि ।
लघुर्देव्यां लघ्वसारे हृष्टमगुरुशीघ्रयोः ॥ ३ ॥
लालाटिकः क्रियालस्ये प्रभुभावनिदर्शिनि[3] ।
लक्षश्छद्मनि लक्षं च संख्याभेदशरव्ययोः ॥ ४ ॥
लेखः स्याद्देवते लेख्ये लेखा स्याद्राजिरेखयोः ।
लता वल्लयां शाखाकल्योः पूपिण्यामाधवीषु [?] च ॥ ५ ॥
लेपः स्याल्लेपने जग्धौ लङ्का पूर्भेदशाखयोः ।
लौहित्ये व्रीहिनद्योर्लुब्धौ व्याधसतृष्णयोः ॥ ६ ॥
लीला विलासक्रीडयोः लक्ष्मीपुत्रो हयाढ्ययोः ।
लक्षं युक्ते च लब्धव्ये लक्ष्म चिह्नप्रधानयोः ॥ ७ ॥
लक्षणं नाम्नि चिह्ने च लालाकं मुखरेऽपि च [?] ।
लोको जने पिष्टपे[4] च नवश्छेदनलेशयोः ॥ ८ ॥
लग्नं राश्युदये युक्ते लक्ष्मीपतिर्हरौ नृपे ।
लक्ष्मी श्रीशोभासंपत्सु लोहितं कुङ्कुमासृजोः ॥
लूता पिप्पलिकोर्णाभ्योः लालसौत्सुक्ययाच्ञयोः ॥ ९ ॥

॥ इति लकारः ॥



1. IO[1] and IO[2]. राजिषु. The reading adopted above is based on Sarvānanda on Amara III-iii-141.
2. IO[2]. मीली.
3. IO[1]. प्रभुभावनिदर्शनि. सदालस्यप्रभु is the reading according to Bhānuji on Amara III-iii-17.
4. IO[2]. पिष्टपयोः.

## [वकारः]

वार्ता वैतिङ्गणोदन्तकृष्यादिषु च वर्तने ।
वार्तमारोग्यनिःसारवृत्तिशालिषु नीरुजि ॥ १ ॥

वर्णो यशसि विप्रादौ गुणाक्षारकुथासु च ।
शुक्लादिस्तुतिभेदेषु चित्रे रूप्ये विलेपने ॥ २ ॥

वरो जामातरि श्रेष्ठे दैवादेवाञ्छिते [दैवताद्वाञ्छिते] वृतौ ।
वरी मता शतावर्यां वरमल्पेप्सितेऽव्ययम् ॥ ३ ॥

वैशागन्ध्या गरीमुख्योः करिणीयोषितोरपि ।
वशः प्रवेश आयातु[?] अभिलाषे च कथ्यते ॥ ४ ॥

विषयीध्वनिरुद्दिष्टो वैषयिकजने नृपे ।
इन्द्रिये कामदेवे च विषयासक्तपूरुषे ॥ ५ ॥

विधानं कैविकरणे विधावभ्यर्चने घने ।
वेदनायामुपाये च कथ्यते वैरभेदयोः ॥ ६ ॥

वृषा मूषिकपर्ण्यां तु वृषः स्याद्वृषभौषधौ ।
धर्मप्रभेदराश्योश्च श्रेष्ठाम्बु[?] गोस्वशुक्रले [वासशुक्रले]॥ ७ ॥

व्यसनं पापरागादिदैवारिष्टफलेषु च ।
विपत्तारः शुभे शक्तौ विधुः केशवचन्द्रयोः ॥ ८ ॥

विनीतो वाणिजे क्षिप्ते निभृते विजितेन्द्रिये ।
विनयं चापि दृष्टं च वृष्णिर्यादवमेषयोः ॥ ९ ॥

१. IO[2]. वातिङ्गण.
२. IO[2]. वार्तामारोग्य.
३. Sarvānanda on Amara III-iii-214—
वशा वन्ध्यगवीयूथ्योरायत्ता योषितोरपि
R. p. 771—वशावन्ध्यागवीवध्वोः करिणीयोषितोरपि
४. IO[2]. आया तु ह्यभिलाषयोः.
५. IO[2]. करिकराले.

वसुर्योक्त्रेऽग्नौ शुक्षेंऽशौ शिवमाल्यां स्वरान्तरे ।
वैसू रत्ने धने स्वादौ जीववाशाश्मपक्षिषु ॥ १० ॥

विशिखा तु खनित्रे स्यात् प्रतोल्यां विशिखः शरे ।
विद्धं सूच्यादिनिम्ने स्यात् सादृश्ये ताडिते तथा ॥ ११ ॥

विहारः स्वगतावासक्रीडापरिभ्रमेषु[क्रमेषु]च ।
वर्वरः केशविन्यासे पारसीकजनेऽधमे ॥ १२ ॥

स्याद्व्यतिकरशब्दोऽयं व्यसनव्यतिषङ्गयोः ।
विवेकः सलिलद्रोण्यां पृथग्भावविचारयोः ॥ १३ ॥

विषयो गोचरे देशे रूपादौ नित्यसेविते ।
वितानः शुड[तुच्छ] उल्लोचे यागे विस्तारमन्दयोः ॥ १४ ॥

वर्ष्म देहे प्रमाणे च दृश्यते सुन्दराकृतौ ।
वामं सव्ये प्रतीपे च चारौ वामा च योषिति ॥ १५ ॥

विमानं देवतायाने सप्तभौमगृहे तथा ।
व्युत्थानं स्वातन्त्र्ये हृद्ये विरोधाचरणेऽपि च ॥ १६ ॥

वेकटः स्याद्विकटिके मत्स्यभेदे चमूनि च ।
वीवधो विवधः पाण्या पर्याहरेऽध्वभारयोः ॥ १७ ॥

विधिर्दैवे विधाने च काले धातरि चेष्यते ।
विष्टरः पादपे पीठे कुशमुष्टौ च दृश्यते ॥ १८ ॥

वप्रो रोधसि केदारे प्राकारे पितरि स्थितः ।
वेगः प्रवाहकिंपाकरेतस्सु कथितो जवे ॥ १९ ॥

वाहस्तुरङ्गमे याने वृषो वाहभुजेऽपि च ।
व्यलीकपीडनाकार्यविलक्षेषु च विप्रिये ॥ २० ॥

1. IO[1] omits वसू रत्ने....विधवा स्त्रियां (Verse 36.)

विग्रहो विस्तरे युद्धे वाक्यभेदे कलेबरे ।
वरचन्दनं कालीये देवदारुमहीरुहे ॥ २१ ॥

वारि नीरेऽथ वा विन्दुकलसी कविवन्दयोः[?] ।
वालं कटे शतपले शुण्के सेचनकर्मणि ॥ २२ ॥

वीथिर्वर्त्मालिगेहाङ्ग पङ्क्तिरूपकयोरपि ।
वि. [धुः] चन्द्रे चतुरङ्गे पाशके समुदाहृतः ॥ २३ ॥

विविक्तं स्यादसंबाधे पवित्रे विजनेऽपि च ।
विषाणं करिणां दन्ते पशुशृङ्गेऽपि कीर्तितम् ॥ २४ ॥

विलेपनं यवागु [यवाग्वायां] चारुभूषणयोरपि ।
व्यञ्जनं तेमने श्मश्रुचिह्नेष्ववयवेऽपि च ॥ २५ ॥

वर्तनं तर्करीपिण्डे जीवने वामने तथा ।
विश्वकर्मा दिवानाथे देवानामपि शिल्पिनि ॥ २६ ॥

भवेद्विहननं घाते वधे विघटने तथा ।
विस्रम्भः स्यात्परिचये विश्वासविप्रलम्भयोः ॥ २७ ॥

वेष्टनं मुकुटोष्णीषवाटेषु परिभाषितम् ।
वर्षाः प्रावृषि वर्षं तु लोकधाधाब्द[लोकद्वीपाब्द]वृष्टिषु ॥ २८ ॥

विम्बं तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले ।
वृजिनः कथितः केशे वृजिनं भुग्ने किल्बिषे ॥ २९ ॥

व्याघ्रौषध्यां व्याघ्रः पशौ राजादिपूर्वको वरे ।
विनायको विघ्नराजे तथा देशबलेऽपि च ॥ ३० ॥

वृत्तान्तो विशेषे कार्त्स्न्ये वार्ता प्राक्तनयोरपि ।
वयस्था त्वभयाधात्र्योर्वयस्थो····वनच्ययोः[?] ॥ ३१ ॥

वयः पक्षिणि धान्यादौ दृश्यते यौवनेऽपि च ।
विपणिः पण्यवीथ्यां तु वीक्षि....[ते क्व]चिदापणे ॥ ३२ ॥

वाच्ययुक्त. वदे [वाच्योऽयुक्ते पदे?] वाच्या. हे सिते [वाच्यं हीने च कुत्सिते]

वार्धकं स्याद्वृद्धकार्ये वृद्धत्वे वृद्धसंहतौ ॥ ३३ ॥

विहायस्तु मतं व्योम्नि विहायश्चापि पक्षिणि ।
विधा विधाने हस्त्यन्ने प्रकारे वेतनर्द्धिषु ॥ ३४ ॥

विष्टिः कर्मकरे तस्य मूल्ये करणकर्मणाम् ।
भवेद्विदारणं भेदे तथा विद्धस्वनेऽपि च ॥ ३५ ॥

विस्रस्तो विश्वसनार्शे [विश्वासानर्हे] विश्वस्ता विधवा स्त्रियाम् ।
विवशो वेशप्रकृतावरिष्टे दुष्टधीगुणे ॥ ३६ ॥

वामनः केशवे खर्वे दृश्यते दिग्गजान्तरे ।
विद्रुमः स्यात्किसलये प्रवालमणिभूरुहोः ॥ ३७ ॥

व्यूढो विशाले विन्यस्ते संहतेऽपि प्रयुज्यते ।
वरिष्ठः स्याद्गुरुतमे तथा वत्से च दृश्यते ॥ ३८ ॥

विच्छिन्नस्तु समारब्धे कथ्यते च द्विधाकृते ।
वर्तिर्दीपदशायां तु दीपे गात्रानुलेपने ॥ ३९ ॥

वारुकी सिन्धौ चित्राश्वे पर्णजीवे च विद्विषि ।
वामिलो दाम्भिके चैव वृषाकपिः शिवे हरौ ॥ ४० ॥

विकारो रुजि विकृतौ विभुः परिवृढे दृढे ।
वृद्धिर्वर्धन आनन्दे वेधा विधिमनीषिणोः ॥ ४१ ॥

वपुः शस्ताकृतौ काये वञ्चकः फेरुधूर्तयोः ।
वर्षाभूर्भेकशीथघ्न्योर्वृद्धः स्थविरधीमतोः ॥ ४२ ॥

विवस्वान् मनौ सूर्ये वीजं रेतसि कारणे ।
विस्तारो विस्तृतस्तम्भे विकाशो विजने स्फुटे ॥ ४३ ॥

व्यवायोऽन्त[1]र्दुरितयोर्वहो[होऽपि] स्कन्धवाहयोः ।
वृष्टिः समृद्धिफलयोर्वृषयो व्यक्तशुक्रयोः ॥ ४४ ॥

वीरुद्विटपाल[वीरुल्लताविट]पयोर्वापाविवमेहयोः[?] ।
व्यासो.. व्यायते [गाढे व्यापृते च] वीचिः स्तोकतरङ्गयोः ॥ ४५ ॥

वृषाकपायी श्रीगौर्योः विन्दुर्दातरि विप्रुषि ।
वा[2]रुणी च सुराप्राच्योर्विभावसुः शुचौ रवौ ॥ ४६ ॥

विकटं पृथौ कराले विष्कम्भस्तरुरोधसोः ।
विशुद्धं निभृतौ सत्ये वृषभः पुङ्गवे वृषे ॥ ४७ ॥

विगतो निष्प्रभे वीते वुधः सौम्ये कवौ सुरे ।
व्यालो व्याघ्रे खले सर्पे विस्मयश्चित्रदर्पयोः ॥ ४८ ॥

वाहिनी पूतनानद्योः वेल्लितं कुञ्चिते धुते ।
वर्धनं छेदने वृद्धौ वीरस्तु सुभटे वरे ॥ ४९ ॥

विल्वं विचारिते लब्धे विट् च मानुषवैश्ययोः ।
विलग्नो मध्ये व्यायामः पौरुषे च श्रमे तथा[3] ॥ ५० ॥

विश्वाख्या विषाजगतोर्व्यक्तः स्फुटे च पण्डिते ।
विशारदो वुधे श्रेष्ठे विवरं दोषरन्ध्रयोः ॥ ५१ ॥

वैदेही सीतापिप्पल्योर्व्यग्रो व्याहत आकुले ।
विकृतोत्पले वीभत्से वर्जनं त्यागहिंसयोः ॥ ५२ ॥

वर्त्म नेत्रच्छदे मार्गे वाष्प ऊष्मणि चाश्रुणि ।
विरोचनोऽर्के चन्द्राग्न्योर्वदान्यो दातृवाग्मिनोः ॥ ५३ ॥

वाग्यो निर्वेदने कल्ये वैशाखो मासमन्थयोः ।
विश्लेषो विधुरे योगे वरीयान् विपुले वरे ॥ ५४ ॥

१. IO$^2$. अन्तर्हितयोः.
२. IO$^2$. वारुणी सुराप्रतीच्योः.
३. IO$^2$ omits तथा.

बद्धो रूपेऽपि विड्भासोः वनं कानननीरयोः ।
विष्वक्सेनाख्या तु फल्यां विष्णौ प्रस्थानवर्गयोः ॥ ५५ ॥

व्यूहो वृन्दे बलन्यासे वैज्ञो हीरकशस्त्रयोः ।
विक्रमोऽतिशक्तिक्रान्त्योर्वीर्यं[1] वत्सेऽश्रुरेतसोः[2] ॥ ५६ ॥

॥ इति बकारः ॥



१. IO[2]. वध्या.

२. The following are additional verses attributed to Ajaya and they come under this section :—
बिषयो गोचरे देशे रूपादौ नित्यसेविते. R. p. 649.
विष्टरः पादयोः पीठे कुशमुष्टौ च दृश्यते R. p. 746-7.
वातुलो वातसङ्घाते वातुले मारुता सह R. p. 761.
शय्याभेदे वटक्रोऽस्त्री कपोतवसतावपि R. p. 187.

## [शकारः]

शृङ्गं विषाणेऽम्बुपात्रे पर्वताग्रप्रभुत्वयोः ।
शृङ्गी चातिविषामीनभेदयोर्वृषभौषधे ॥ १ ॥

शिवं भद्रे शिवः शंभौ कीले शिवा तु जम्बुके ।
पथ्यागौर्योः शमीधात्र्योः शुद्धः केवलपूतयोः ॥ २ ॥

श्रेयः[1] शिवे प्रशस्ये च धर्मे चातिशयेऽपि च ।
श्रेयसी गजपिप्पल्यामभयापाठयोरपि ॥ ३ ॥

शम्बरं[2] च जले दृष्टं मृगदैत्यविशेषयोः ।
शम्बरी मूषिकपर्ण्यां शैलूषो नटबिल्वयोः ॥ ४ ॥

शिखा शाखाशिफाग्रेषु चूडप्रवालयोरपि ।
ज्वालायां बर्हिचूडायां शिलीमुखोऽलिबाणयोः ॥ ५ ॥

शुचिः शुद्धाग्निशुक्रेषु तथाषाढेऽनुपद्रुते ।
उपधा शुद्धसचिवे शापः शपथनिन्दयोः ॥ ६ ॥

शेषोऽनन्ते गजे नागे स्वीकृतेतरवस्तुनि ।
शेषा निर्माल्यदाने च शितिर्धवलकृ[3]ष्णयोः ॥ ७ ॥

शिखरं पक्वदाडिम्बबीजे च रत्नखण्डके ।
अग्रकेवलयोश्चापि श्रीर्लक्ष्म्यां कान्तिसंपदोः ॥ ८ ॥

शिरो मूर्ध्नि पुरः सैन्ये प्रधाने चापि दृश्यते ।
शुक्रोऽग्नौ भार्गवे ज्येष्ठे शुक्रमक्षिरुजीन्द्रिये ॥ ९ ॥

१. IO[2]. श्रेयोऽतिशयो[ये] प्रशस्ये धर्ममङ्गलयोरपि.

२. Sarvānanda and R. on Amara I-i-26. read this ardha thus:—शम्बरो हरिणे दैत्ये शम्बरं सलिले स्मृतम्. IO[3]. शम्बरं जले शम्बरो.

३. Sarvānanda on Amara III-iii-80. कोष्णयोः.

श्लेष्मघ्नी नैमेल्लिकायां केतक्यामपि दृश्यते ।
शिखी हुताशने वृक्षे मयूरे कुक्कुटेऽपि च ॥ १० ॥

शङ्खो निधौ नागभेदे शङ्खं कम्बुललाटयोः ।
शारदोऽभिनवे वर्षे शालीनेऽपि शरोद्भवे ॥ ११ ॥

शोणो वल्कवर्णाभे लोहिताश्वे नदान्तरे ।
शिपिविष्टः खलतिके दुश्चर्मणि महेश्वरे ॥ १२ ॥

शिलीन्ध्रो वृक्षभेदेऽपि मत्स्यके चुलिकामृदि ।
श्रेणिः समानजातीनां संहतावावलौ तथा ॥ १३ ॥

शक्वरी मेखलायां स्यान्नदीछन्दोविशेषयोः ।
शर्कराक्षररुग्भेदकुम्भादिशकलेषु च ॥ १४ ॥

शतह्रदाख्या शाल्मल्यां देशविद्युद्विशेषयोः ।
शीतं तुषारवानीरबहुवारद्रुमेषु च ॥ १५ ॥

शिशुमारः पयोजन्तौ तारकामयकेशवे ।
शय्या ग्रन्थस्य निर्माणे खट्वादिशयनीयके ॥ १६ ॥

शलो[शाला]वृकस्तु क्रूरारौ वलीमुखशुनोरपि ।
शुश्रूषा श्रोतुमिच्छायां स्यात्कथापरिचर्ययोः ॥ १७ ॥

शतपत्राख्याब्जे केकिदार्वाघाटेषु सारसे ।
श्यामः कृष्णे श्यामा रात्रौ शारिवायां फलीविशोः ॥ १८ ॥

शृङ्गारः करिभूषायां नाट्यस्य च रसान्तरे ।
शुण्डा मलिनहस्तिन्यां मदिराहस्तिहस्तयोः ॥ १९ ॥

१. IO². घनासल्लिक्यां.

२. IO¹ and IO² क्रमेषु. The reading adopted above is found in Bhānuji, Sarvānanda and R. on Amara II-iv-30.

शङ्कुः शस्त्रान्तरे कीले यादःसंख्याविशेषयोः ।
शिशुकः शिशुमारे च बालद्रुमविशेषयोः ॥ २० ॥

शम्बुस्तु मुसलाग्रे च लौहे वज्रे च विष्णुजे ।
शरणं गृहरक्षित्रोः मारणे रक्षणेऽपि च ॥ २१ ॥

शरवाणिः शरमुखे पापिष्ठशरजीविनोः ।
शार्ङ्गः शृङ्गस्य कोदण्डे विष्णुचापे शरासने ॥ २२ ॥

शुषिरं वंशादिवाद्ये गर्ते गर्ते[गर्त]समन्विते ।
शाला तरुस्कन्धशाखागृहैकदेशयोर्गृहे ॥ २३ ॥

शौन्यासनिकश्चौरे स्यादौखितासनिकेऽपि च ।
शुल्को घट्टे विवाहाय वैराद्ग्राह्यधनेऽपि च ॥ २४ ॥

शक्तिरायुधभेदे स्यादुत्साहादौ बले तथा ।
शीतचम्पकशब्दोऽयं दीपतर्पणयोर्मतः ॥ २५ ॥

शुद्धान्तान्तःपुरे गुह्यकक्षभेदे च भूपतेः ।
शिलाद्वाराधरस्तस्तम्भवेदः शिलमुञ्छके[4] ॥ २६ ॥

शाक्वरं छन्दसि तथा शाकरो वृषभे मतः ।
श्राद्धः श्रद्धावति श्राद्धं शास्त्रतः पितृकर्मणि ॥ २७ ॥

शुक्तिर्दुनामिकामुक्तास्फोटयोरश्वलक्षणे ।
शकुनो विहगे गीते शकुनं फललक्षणे ॥ २८ ॥

१. IO[2]. यवाद्ग्राह्य. ग्राह्ये is the reading of Mahendra in his commentary in the Anekārthasangraha of Hemacandra.

२. Bhānuji on Amara III-iii-66 कक्षा. Sarvānanda on Amara III-iii-64. गुह्ये कक्ष्याभेदे.

३. Sarvānanda on Amara II-ii-13. स्तम्बहयद्वोः.

४. Sarvānanda adds नासाद्वारोर्ध्वंकाष्ठे स्यात् नासिकायां च कीर्तिता.

५. IO. शुक्तिर्युनामिका.

श्रवणः स्यूते नक्षत्रे श्रावणं श्रुतिकर्णयोः ।
शीस्याख्या मदनतरौ कौण्डे श्वाविट्छलाकयोः ॥ २९ ॥

शासनं शास्त्र आज्ञायां लेखेऽपि परिभाषितम् ।
शारिरक्षोपकरणे ख्यातं पर्यायभेदयोः ॥ ३० ॥

शिशिरं शीतले दृष्टमृतुभेदतुषारयोः ।
शाखा वेदविभागे च तरोरवयवे भुजे ॥ ३१ ॥

शशो रोगे च पुंभेदे दृष्टं प्राण्यन्तरेऽपि च ।
शैल्कस्तु वल्कले खड्गे शक्रः कुटजवज्रिणोः ॥ ३२ ॥

शरः स्याच्छवले वायौ शमलाख्या वधे यमे ।
श्रुतिः श्रोत्रे च वेदे चँ शुक्रं सर्मणि निष्ठुरे ॥ ३३ ॥

शैकलं वन्धनेऽर्धे च शादः शस्पयोः[जम्बालशष्पयोः] ।
श्रीपर्णमग्निमन्थेऽब्जे शंसा वचसि वाञ्छिते ॥ ३४ ॥

शरदृत्वन्तरे वर्षे शूलो रुक्शस्त्रभेदयोः ।
श्वशुर्यो देवरे स्याले शिखण्डो बर्हचूडयोः ॥ ३५ ॥

शाको द्वीपान्तरे शक्तौ श्वेतस्तु रजते सिते ।
शास्त्रमागम आज्ञायां शान्तिरुक्ता समे शुभे ॥ ३६ ॥

शङ्का त्रासवितर्के च श्रद्धा श्रद्धानुकाङ्क्षयोः ।
शीलं प्रकृतौ सद्वृत्ते शयनं रतशय्ययोः ॥ ३७ ॥

१. IO[1]. शालाख्या The reading of this ardha in R. (on p. 312) is :—श्वाविच्छलाका शल्ली शकलं तु नृषण्डयोः.
२. IO[2]. कान्ते.
३. Sarvānanda on Amara III-iii-13. शल्कं तु वल्कले खण्डे.
४. IO[1] omits वेदे च.
५. IO[2]. शुक्तं.
६. Sarvānanda I-X-16. Bhānuji I-X-17. and Vidyāvinoda p. 164. शकलं वल्कलेऽर्धे च. R. शाकलं.

शस्त्रं प्रहरणे लोहे श्लोकपद्ये यशस्यपि ।
शालः कपे मानभेदे शूकोऽनुग्रहशोकयोः ॥ ३८ ॥

शुभ्रं शुक्रे प्रदीप्ते च शमः शान्तौ निवर्तने ।
श्येनो विहङ्गमे श्वेते[शुक्ले] शुषः शोषे तथाविले ॥ ३९ ॥

शुकाख्या कीरे स्थौणेये शस्तुब्रह्मार्हतोः शिवे ।
श्रीपलाख्या बिल्वे नील्यां शिखरीद्रुमशैलयोः ॥ ४० ॥

॥ इति शकारः ॥



१. IO[1] and IO[2] शुकोऽनुग्रहशुङ्गयोः. The reading adopted above is based on Sarvānanda on Amara II-ix-23.

२. R. p. 173. शुभ्रं शुभ्रे प्रदीप्तं च शारणिः पञ्चवाचनी.

## [षकारः]

षण्डः स्मृतो[1] बलीवर्दे षण्डं तु कानने भवेत् ।
षण्डाली तैलमाने च सरस्यामपि कीर्तिता ॥ १ ॥

॥ इति षकारः ॥



1. $IO^{1}$ and $IO^{2}$ स्यूते. The reading adopted above is based on Sarvānanda on Amara I-X-41 and Bhānuji on Amara I-X-42.

## [सकारः]

साधनं दापने सिद्धौ धनोपायनिवृत्तिषु ।
मोहने मृतसंस्कारे गतावनुगमे जवे ॥ १ ॥

स्यात्संसरणं संसारे नगरस्योपविक्रमे ।
रथादीनां च संकीर्णगमने संसृतावपि ॥ २ ॥

संविद्बुद्धौ प्रतिज्ञायामाचारे नाम्नि तोषणे ।
संभाषणे क्रियाकारे सङ्केतज्ञानयोरपि ॥ ३ ॥

सरस्वती स्यात् स्त्रीरत्ने नद्यां नद्यन्तरे गवि ।
भारत्यां तु रसंज्ञायां नदैसागरयोरपि ॥ ४ ॥

समयः शपथाचारे सिद्धान्तेषु च संपदि ।
क्रियाकारेऽथ निर्देशे संकेते कालभावयोः ॥ ५ ॥

सत्वं द्रव्ये चात्मभावे व्यवसायस्वभावयोः ।
पिशाचादौ गुणे प्राणे बले जन्तौ च चेतसि ॥ ६ ॥

सञ्ज्वरः संश्रवे युद्धे क्रियाकारे तथापदि ।
सञ्ज्वरं वृषभेदे तु दृश्यते च शमीफले ॥ ७ ॥

स्थपतिः सौविदल्ले स्यात् बृहस्पतीष्टयाजिषु ।
धनदे शिल्पिभेदे च स्तननं कुन्तले ध्वनौ ॥ ८ ॥

संभवो मेलके हेतौ संकेतापाययोरपि ।
आधाराधेयतुल्यार्थे संबोधो बोधनाशयोः ॥ ९ ॥

१. IO[2]. सविद्युद्धे.
२. IO[2]. सव.
३. IO[1]. वचसाग-
४. IO[2]. सत्यं द्रव्ये चाव्ययभावे.

सैरेन्ध्री परवेश्मस्थस्वतन्त्रशिल्पियोषिति ।
वर्णसंकरजातायां स्वामीपतिविशाखयोः ॥ १० ॥

स्फुटो व्यक्ते विकसिते व्याप्ते शुक्लेऽपि दृश्यते ।
समूढः पुञ्जे भव्ये च सद्योजाते निरुत्प्लुते ॥ ११ ॥

संकुलाख्या भवेद्व्याप्तौ युद्धविस्पष्टवाक्ययोः ।
सूनृतं स्यात् प्रिये सत्ये वचने मङ्गले तथा ॥ १२ ॥

सुमनाः पण्डिते पुष्पे मालतीदेवयोरपि ।
संभ्रमो भयसंवेगगौरवेषु महाद्रुमे ॥ १३ ॥

सूत्रे च [सूत्रश्च] सूचनादृष्टो व्यवधाने नये तथा ।
सौम्यः सोमात्मजे चारौ कथितः सोमदैवते ॥ १४ ॥

सुरभिर्गवि चैत्रे च सुगन्धे घ्राणतर्पणे ।
सार्वभौमो दिशां नागभेदे सर्वमहीभुजि ॥ १५ ॥

समुन्नद्धो गर्विते च पण्डितंमन्य ईश्वरे ।
सन्धिनामा नदीमद्यसुराङ्गासु च कथ्यते ॥ १६ ॥

साधृतं बर्हिसंघाते पण्यवीथ्यातपत्रके ।
समुदायः समूहे स्यात् समये च समुद्गमे ॥ १७ ॥

सालः सर्जतरौ वृक्षे प्राकारेऽपि प्रयुज्यते ।
स्पर्शो दाने रुजायां च स्पर्शके स्पर्शने तथा ॥ १८ ॥

संज्ञा संकेतगायत्रीचेतनासु च नामनि ।
सिन्धुर्नदे समुद्रे च मद्रदेशनदीषु च ॥ १९ ॥

१. IO². स्वैरिन्ध्री.
२. IO². व्यधनेऽभिनये.
३. IO¹ and IO². प्रकारोऽपि.

सर्गो[1] निश्चये निर्माणे प्रोत्साहाध्याययोरपि ।
सौदामिनी पुरीभेदे चञ्चलायां[2] प्रकीर्तिता ॥ २० ॥

समाह्वयः समाघाते युद्धे च पशुपक्षिभिः ।
सरकं सीधुपानेक्षुसीधुनोर्मद्यभाजने ॥ २१ ॥

सम्बन्धः समृद्धे शक्ते हिते न्याये च कथ्यते ।
स्कन्दो महीपतावंशे समुच्चये च संहतौ ॥ २२ ॥

संपुटस्तु कुरबके तलिकायां च कीर्तितः ॥
सन्धिः संघट्टने दृष्टः स्मरसंवसुरुङ्गयोः ॥ २३ ॥

स्पर्शनः प्रवेणे[3] दृष्टः स्पर्शनं स्पर्शदानयोः ।
भवेत्क्षुरतताली तु दूतिकायां शिरःस्रजि ॥ २४ ॥

सामुद्रन्तु समुखे कथितं देहलक्षणे ।
सूनाख्या[4] पुष्पिते पुष्पे जिह्वातले वधालये ॥ २५ ॥

संवित्तिरविवादि[वादे स्यात्] प्रतिपत्तावपि स्मृता ।
संपरायः स्मृतो[7] युद्धे विपदुत्तरकालयोः[6] ॥ २६ ॥

संस्थानमाकृतौ चिह्ने सन्निवेशे चतुष्पथे ।
सन्तानः सन्ततौ गोत्रे देववृक्षे तथात्मजे ॥ २७ ॥

संस्त्यायः सन्निवेशे तु सङ्घातेऽपि प्रयुज्यते ।
साधीयोऽनुस्वराटे[ऽन्तिके बाढे] स्यात् तथैवात्यन्तशोभने ॥ २८ ॥

साधुर्वार्द्धुषिके दृष्टः सज्जने सुन्दरे तथा ।
संसिद्धे सङ्गमे युद्धे सभायामपि दृश्यते ॥ २९ ॥

१. IO[3]. स्वर्गः.
२. IO[2]. तडिद्भेदे च विद्युति.
३. IO[2]. प्रवशे.
४. IO[1] and IO[2] सूताख्या.
५. IO[1] and IO[2]. सुते चैव. The reading adopted above in based on R. p. 736.
६. फालयोः IO[1] and IO[2]. The reading adopted above is based on R. p. 736.
७. R. मृत्यौ p. 722.

सिकता वालुकायां तु तयैवाच्छन्नभूतले ।
स्वयाम्बुनोरसराजे[?]प्रासादवासुदेवयोः ॥ ३० ॥

सिद्धरसः पारदेऽपि रससिद्धे च कीर्तितः ।
सह्यमारोग्ये सोढव्ये सह्यश्च पर्वतान्तरे ॥ ३१ ॥

समञ्जसं समाख्यातमभ्यस्तोचितयोरपि ।
सूदः स्यात् सह सूपेन सूपकारे च तेमने ॥ ३२ ॥

सावराख्यापराधे च लोध्रे पापे च पठ्यते ।
सङ्कीर्णं सङ्कटे व्याप्ते तथा च वर्णसङ्करे ॥ ३३ ॥

स्वशब्दो ज्ञातिधनयोः तथात्मात्मीययोरपि ।
संग्रहः स्यान्महोभुक्रे [महोद्योगे] संक्षेपे ग्रहणे तथा ॥ ३४ ॥

भवेत्सारसनं काञ्च्यामुरस्थेऽपि निगद्यते ।
स्थासफोऽपि च चर्चायां जलादीनां च बुद्बुदे ॥ ३५ ॥

संमतिः स्यादभिलाषे तथात्मज्ञान एव च ॥
साहसं तु बलात्कारे कृतकार्ये दमेऽपि च ॥ ३६ ॥

सितं प्राववसाने[?] च तथाधवलबद्धयोः ।
स्थिरदंष्ट्रध्वनिः ख्यातो भुजङ्गादिवराहयोः ॥ ३७ ॥

स्वस्तिको नृपतेर्गेहे गृहभेदे चतुष्पथे ।
सुदर्शनो मेरुजम्ब्वां शक्रपूर्विष्णुचक्रयोः ॥ ३८ ॥

१. IO$^1$ and IO$^2$ read **सारथ्या चापराधे.** The reading adopted above is based on Bhānuji and Sarvānanda on Amara II-iv-33. R. p. 218 reads **सावरश्चावरोधेऽपि लोध्रे पापे तपस्विनि.**

२. Bhānuji III-iii-57 and R. p. 689. **कुत्रचित्.**

३. IO$^1$ and IO$^2$. **मुरस्त्रे च.** The reading adopted above is based on Sarvānanda, on Amara II-viii-64.

४. IO$^2$. **जक्ष्यां.**

[1]समुदायः समुदये पृष्ठस्थायिबलेऽपि च ।
स्थूलोच्चयस्त्वसाकल्ये करिमध्यगतौ तथा ॥ ३९ ॥

सूतः शूद्रात् क्षत्रियाजे बन्दिसारथितक्षसु ।
सत्रं वने सदादाने छदनाध्वरयोरपि ॥ ४० ॥

सवनं याजने स्नाने सोमनिर्दलनेऽपि च ।
सन् सत्ये विद्यमाने च प्रशस्तार्चितसाधुषु ॥ ४१ ॥

समाहितं समाधिस्थे प्रतिज्ञातेऽपि विश्रुते ।
समाधिर्नियमे ध्याने प्रयासे चापि युज्यते ॥ ४२ ॥

स्वधा गङ्गेष्टकाचूर्णमहीध्वमृतमूलयोः ।
सभा स्यान्मन्दिरे व्यूहे सभासदि च संपदि ॥ ४३ ॥

[3]सारङ्गश्चातके ख्यातः सबले हरिणे तथा ।
सृष्टं भूरिणि मुक्ते च निर्मिते चाथ भूषिते ॥ ४४ ॥

समर्यादं समीपे स्यान्मर्यादासहिते तथा ।
सन्धिन्यकालदुग्धायां वृषाक्रान्तावपातयोः ॥ ४५ ॥

सन्निधिः सन्निधानेऽपि प्रत्यक्षेऽपि प्रयुज्यते ।
सर्वतोभद्राख्या[4] निम्बे गम्भारीगृहभेदयोः ॥ ४६ ॥

१. Sarvānanda III-iii-148 समुच्चयः.

२. IO². छादन.

३. Bhānuji on Amara II-V-17 reads this ardha thus:— शारङ्गश्चातके ख्यातः शबले हरिणेऽपि च and makes the further remark इति तालव्यादावजयः. Probably in the copy which Bhānuji was using this found a place in the tālvyādi.

४. IO². स्यान्निगम्भारी.

सहा स्यात्कुमारीमुद्गपर्ण्योः सहः सशक्तिके ।
संख्यमायोधने संख्या त्वेकत्वादिविचारयोः ॥ ४७ ॥

सोमवल्कस्तु धवलखदिरे कट्फले तथा ।
सारो न्याय्ये स्थिरांशे च बले श्रेष्ठे च भाषितः ॥ ४८ ॥

सन्ततिस्तनये पुत्र्यां विस्तारकुलयोरपि ।
समं सहसि सर्वस्मिन् साधौ समास्तु हायने ॥ ४९ ॥

सूनुर्भ्रातरि पुत्रे च संभोगः सुखभोगयोः ।
सुपर्णस्तार्क्ष्यसंपाके स्वेदः स्वेदनघर्मयोः ॥ ५० ॥

स्तनयित्नुस्तनितेऽब्दे समायातवधान्तयोः ।
संसिद्धिः स्वभावे सिद्धौ सातिर्दानावसानयोः ॥ ५१ ॥

स्थिरा भूमौ शालपर्ण्यां स्थूलो जडेऽथ पीवरे ।
सचिवः सहायेऽमात्ये सेव्यो नलदशस्ययोः ॥ ५२ ॥

सोमः स्यादोषधाविन्दौ सरणिः पङ्क्तिमार्गयोः ।
समीरणोऽनिलौषध्योः सुतः पार्थिवपुत्रयोः ॥ ५३ ॥

सती शैलसुतासाध्व्योः सायकः खड्गबाणयोः ।
सनातनो हरौ नित्ये सव्यं वामे च दक्षिणे ॥ ५४ ॥

स्नेहः प्रेमणि तैलादौ संप्रयोगो रतेऽर्थिते ।
स्वभूर्वेधसि विष्णौ च स्वादुर्मिष्टमनोज्ञयोः ॥ ५५ ॥

स्तिमितो निश्चिते क्लिन्ने संव्यानं छदनेंऽशुके ।
स्नानं वसने पानीये समाघातो वधे युधि ॥ ५६ ॥

सैन्धवो लवणेऽश्वे च स्तम्भनो जडमूर्खयोः ।
सौवीरं काञ्चिके शैलौ सूक्ष्मात्याध्यात्मलेशयोः ॥ ५७ ॥

संस्कारः सङ्कल्पे यत्ने सेवकोऽर्थिप्रसेवयोः ।
सङ्घर्षो घर्षे स्पर्धायां सप्तार्चिदहनेऽशनौ ॥ ५८ ॥

संस्तवः संभवे यज्ञे सीमा क्षेत्रे वधौ स्थितौ ।
संबाधः सङ्कटे योनौ सेनानीः सैन्यपे शुके ॥ ५९ ॥

गुणोत्कर्षे विधातव्यं स्थानं याम्येऽन्तरे स्थितौ ।
संस्था स्थितौ परे नाशे स्वैरः स्वच्छन्दमन्दयोः ॥ ६० ॥

सिवथाख्यान्ने मधूच्छिष्टे सूतकं वसुजन्मनोः ।
स्थित ऊर्ध्वे सप्रतिज्ञे सिद्धार्थः सर्षपेऽजिने ॥ ६१ ॥

सुवर्णं हेम्नि उत्कर्षे सत्यं शपथतथ्ययोः ।
सहोत्थे सहजः सृष्टौ सामिधेनीयमृग्गृचि ॥ ६२ ॥

सैमजो द्विपे सामोत्थे सहा मार्गे सहो बले ।
सेवनं सीवनोपस्त्योः सृतिर्गमनमार्गयोः ॥ ६३ ॥

संस्तरः शयने माने सारसाख्या खगेऽम्बुजे ।
स्थूणा सूर्म्यो तथा स्तम्भे सादी सूताश्ववारयोः ॥ ६४ ॥

सत्तमोऽतिसाधौ श्रेष्ठे स्वरुर्यूपाग्रवज्रयोः ।
रेवानद्यो समुद्रापः [?] सज्जनः साधुगुल्मयोः ॥ ६५ ॥

स्वरूपो रूपिणि प्राज्ञे सखा मित्रसहाययोः ।
स्वप्नः स्वापे सुप्तज्ञाने स्यन्दनस्तिलिशे रथे ॥ ६६ ॥

स्थानेऽव्ययं युक्ते हेतौ स्मातीते पादपूरणे ।
सांप्रतं युक्तेऽवधानार्थे स्वः स्वर्गपरलोकयोः ॥ ६७ ॥

१. IO[1]. अर्थे. ३ IO[2]. समाजो.
२. R. सिद्धार्थौ बुद्धसर्षपौ p. 9.

स्वित् पृच्छायां वितर्के च साक्षात्तुल्यसमक्षयोः ।
समिन्निन्दायां युद्धे च सह च तुल्ययोगयोः ॥
स्वस्त्याशीःक्षेमपुण्येषु सकृत्सदैकवारयोः[3] ॥ ६८ ॥

॥ इति दन्त्यसकारादिवर्णः समाप्तः ॥



१. IO[1] and IO[2] सक्षोऽतुल्यसमक्षयोः. The reading adopted above is based on R. p. 787.

२. Bhānuji on Amara III-iii-242 and R. p. 787. सहैकवारयोः.

३. The following additional verses are attributed to Ajaya and they come under this section:—पुंसि भूरुहमात्रे च सालो वरणसर्जयोः R. p. 198. सर्पाक्षी नकुले चाष्टाच्छत्राकी विषमर्दनी R. p. 266 समानं सत्समैकेषु त्रिषु ज्ञानाभिमाहृते R. p. 723. This is stated to be common to Rabhasa and Ajaya in R.

## [ हकारः ]

हरिः सिंहार्कभेकेषु शुके विष्णौ यमेऽनिले ।
इन्द्रे चन्द्रे[1] कपावीशे स्वर्णवर्णाहिराजिषु ॥ १ ॥

हंसो[2] निर्लोभे भूपाले भास्करे विहगान्तरे ।
योनिभेदे विशुद्धे च श्रेष्ठे राजादिपूर्वकः ॥ २ ॥

हृषितः सह हृष्टेन जातहर्षेऽथ विस्मिते ।
मनोहरे च रोमाञ्चे हुतिः शास्त्रे तथार्चिषि ॥ ३ ॥

हिरणं च हिरण्यं च स्यादकुप्ये कपर्दके ।
धान्यमानान्तरे हेम्नि ह्रादिनी पविविद्युतोः ॥ ४ ॥

हृद्यं हृत्प्रिये हृज्जाते वशमन्त्रे[1] च हृद्यते ।
हेरम्बो गजवक्त्रे च महिषे प्रथमान्तरे ॥ ५ ॥

हस्तिमल्ल इति ख्यातः शक्रनागे विनायके ।
हायनो वत्सरे प्रोक्तः तथा व्रीहिमयूखयोः ॥ ६ ॥

हस्तः शुण्डायां नक्षत्रे करे केशात्परे चये ।
हस्तनिर्यास उद्दिष्टं निम्बे हिङ्गुरसेऽपि च ॥ ७ ॥

हरिणी हेममये मृग्ये हरिद्रायामपि क्वचित् ।
हेषणः स्याच्छिलाभेदे स्वर्णकृत्क्रकलासयोः ॥ ८ ॥

हरिचन्दनमाख्यातं कुङ्कुमे देवपादपे ।
हरिदस्वान्तरे वर्णे तृणे ककुभि कथ्यते ॥ ९ ॥

हृदयं वक्षसि स्वान्ते हेलावज्ञाभिलाषयोः ।
हैमवत्युमावचसोर्हवो ह्वयाज्ञयोर्मुखे ॥ १० ॥

१. IO². मन्द्रे. २. IO¹. हरो.

हनू रुजान्तरौषध्योर्हरणं यौतके हृतौ ।
हठस्तु प्रसभे पार्ष्णौ हरिणः पाण्डरे मृगे ॥ ११ ॥

हविः सर्पिषि होतव्ये हिंसा चौर्यादिके वधे ।
हिमं शीतेऽपि शिशिरे हारौ मुक्तावलौ हृतौ ॥ १२ ॥

अतोऽव्ययानि कथ्यन्ते हन्तशब्दोऽनुकल्पने ।
वाक्यारम्भे विषादे च हर्षार्थे च प्रयुज्यते ॥ १३ ॥

हि कारणे विशेषे च तथावधारणेऽपि च ।
हा खेदेऽशुचिपीडायां हुं परिप्रश्नतर्कयोः ॥ १४ ॥

॥ इति हकारः ॥



*

## [ क्षकारः ]

क्षुद्रः क्रूराल्पनीचेषु दीने च क्षुद्रमस्त्रियाम् ।
गङ्गायां काशिकायां च नदीसरघयोरपि ॥ १ ॥

क्षेत्रियं क्षेत्रसंघाते[3] तृणे साध्ये गदे तथा ।
परदेहचिकित्सार्हे क्षेत्रियः परिदारके ॥ २ ॥

क्ष्वेडा समिद्वीरसिंहनादेवैणवशल्ययोः ।
क्ष्वेडो विषे निनादे च क्ष्माभृत्पर्वतभूभुजोः ॥ ३ ॥

क्षेमो योगे हिते युक्ते क्षमा भूमितितिक्षयोः ।
क्षत्ता शूद्रात्क्षत्रियाजे प्रतीहारे च सारथौ ॥ ४ ॥

क्षणस्तु व्यापृते ज्ञेयो मुहूर्तोत्सवपर्वसु ।
क्षेत्रं देहे कलत्रे च केदारे सिद्धधामनि ॥ ५ ॥

क्षयोपचये रोगार्तगेहेषु राजयक्ष्मणि ।
क्षेमस्तु कुशले दृष्टः तथा लब्धार्थरक्षणे ॥
क्षुल्लकः क्षेत्रजे काले कण्टकण्डूयने क्षुति ॥ ६ ॥

॥ इति क्षकारः ॥

॥ इति अजयपालकृतो नानार्थसङ्ग्रहः समाप्तः ॥



१. IO[2]. भ्रुवाहव-

२. IO[1] omits this pāda.

३. IO[1]. संहतौ.

४. IO[2] omits this pāda.

५. IO[2]. नादेवैतं.

६. R. क्षणो व्यापारशून्यत्वे p. 125.

७. Sarvānanda on Amara—II-x-16 क्षुल्लकः पामरे स्तोके क्षारः काचे च भस्मनि.

# NOTES AND ADDITIONS

The Nānārthasaṅgraha has been profusely quoted in certain works like the commentaries of Sarvānanda, Bhānuji, Mukuṭa and Vidyāvinoda Nārāyaṇa on the Nāmalingānuśāsana. For several of the verses we find variant readings and such of those as have not been included in the footnotes are given hereunder :—

| Page. | Verse. | Reading. |
|---|---|---|
| 1 | 6 | निम्बे in the place of नित्ये. see VN p. 789. |
| 2 | 16 | अर्थो विश्वार्थशालिनोः is the first pāda. VN p. 761. |
| 3 | 26 | VN follows Sarvānanda in the reading. VN p. 207. |
| 5 | 44 | Both Mukuṭa and VN read the first ardha thus: अपाङ्गस्त्वङ्गहीने स्यात् नेत्रान्ते तिलकेऽपि च. Mukuṭa p. 1311. VN p. 705. |
| 5 | 49 | Mukuṭa reads the first ardha thus :—अधिष्ठानं रथे साङ्गे प्रभावेऽध्यासने पुरम् p. 1380. |
| 8 | 69 | VN reads the second ardha thus :—अभितः शीघ्रसाकल्ये संमुखोभयतोऽन्तिके p. 812. |
| 10 | 17 | The second pāda is read स्याद्दैर्घ्यप्रभावयोः VN p. 726. |
| 12 | 2 | Mukuṭa reads the second ardha thus :—निराश्रये च भूभागे कथितमूषरेऽपि च p. 1335. |
| 12 | 4 | वाञ्छितेऽपि प्रयुज्यते is the second pāda in Mukuṭa p. 850. |
| 15 | 8 | The second ardha in Mukuṭa is उषा बाणदुहिता स्यादनिरुद्धगृहिण्युषा p. 49. |

| Page. | Verse. | Reading. |
|---|---|---|
| 16 | 23 | The reading in Mukuṭa is the same as that found in Bhānuji. Mukuṭa p. 1480. |
| 16 | 24 | The last pāda as found in Mukuṭa is उतापी द्वौ च बाढार्थौं Mukuṭa p. 1471. |
| 18 | 1 | The first ardha as read by Mukuṭa is ऋषभोऽतिविषायां च शृङ्गी मद्गुरवल्लभा. Mukuṭa further remarks that the same tag is found in Rudra's lexicon also. Mukuṭa p. 554. |
| 22 | 1 | Mukuṭa's reading is the same as that of Bhānuji. Mukuṭa p. 1097. |
| 23 | 5 | नाट्यगीत is the reading in Mukuṭa. The additional ardha given in the footnote as found in Bhānuji is also found in Mukuṭa. p. 1333. |
| 24 | 17 | Mukuṭa's reading is the same as that of Bhānuji. Mukuṭa p. 1383. |
| 24 | 18 | कुशीफले च वल्गायां is the reading in VN p. 786. |
| 25 | 20 | केतनं तु ध्वजे कामे is the reading in Mukuṭa p. 1373. |
| 25 | 21 | वृषाङ्के राजलक्ष्मणि is the reading in VN p. 735. |
| 26 | 33 | रागापराधयोरपि is the last pāda according to VN p. 790. |
| 26 | 42 | Ujjvaladatta in his Uṇādivṛtti in V, 56 reads the first pāda—कीनाशः कृषके यमे. |
| 27 | 46 | सरिन्मात्रेऽपि कुल्याख्या VN p. 178. We do not know how the other pāda was read by VN. |

| Page. | Verse. | Reading. |
|---|---|---|
| 27 | 47 | कौपीनं स्यादकार्येऽपि चीरगुह्यप्रवेशयोः is the uttarārdha according to VN p. 746. |
| 29 | 61 | क्रन्दनं रुदितारावे आह्वाने च निगद्यते is the first ardha according to VN p. 747. |
| 32 | 10 | गोत्रं कुले धने नाम्नि. VN p. 770. |
| 36 | 8 | चन्द्रः स्वर्णेऽपि कर्पूरे चन्द्रो मेचककाम्ययोः VN p. 771. |
| 38 | 8 | The reading of the uttarārdha is very corrupt in VN. As it is found in the ms. it is ज्योतिर्दीप्ताश्मितारासु नेत्राशातौ वने त्रयम् p. 794. |
| 40 | 12 | जम्भीरोऽपि जम्भीरे is the beginning of the verse in VN p. 229. |
| 52 | 6 | The reading in Mukuṭa and VN is the same as found in Bhānuji. Mukuṭa p. 1354. VN p. 732. |
| 52 | 9 | विश्वासे विकृतावपि VN p. 783. |
| 55 | 33 | नु वितर्कोपमानयोः was probably VN's reading for the first pāda in the second ardha p. 806. |
| 56 | 3 | मूलशिम्बिकयोरपि VN p. 798. |
| 56 | 6 | भावे परिकरो वृन्दे परिवारात्ववेकयोः । आरम्भ-पतकीबन्ध. This is the reading in VN p. 763. |
| 57 | 11 | दिग्गजेन्द्रप्रभेदयोः is the fourth pāda in VN p. 699. |
| 61 | 52 | Mukuṭa reads the pūrvārdha in the same way as Bhānuji. Mukuṭa p. 844. |
| 63 | 73 | पङ्क्तिः पदादौ गमने वीरसेनाप्रभेदयोः This is VN's reading of the uttarārdha p. 726. |

| Page. | Verse. | Reading. |
|---|---|---|
| 64 | 79 | VN reads in the same way as Sarvānanda p. 788. |
| 64 | 86 | The last word is संभाव्ये in VN p. 64. |
| 65 | 1 | फलं जातीफले लाभे वीणाग्रे फलकेऽपि च is the first ardha in VN p. 779. |
| 67 | 12 | VN reads in the same way as Sarvānanda and Bhānuji. Mukuṭa's reading is बीभत्सो विकृते पार्थे क्रूरे पापवृतात्मनोः Mukuṭa p. 1463. |
| 68 | 5 | प्रार्थनाभृतिसेवासु भिक्षाभिक्षितत्रिषु. This is the reading in VN p. 791. |
| 69 | 13 | The third pāda is भीरुः स्यात् कातरे नार्याम् VN p. 361-2. |
| 71 | 16 | VN reads in the same way as Sarvānanda p. 779. |
| 74 | 6 | रजतं रजने रूप्ये शोणिते हृद्हारयोः is the reading in Mukuṭa p. 1350. |
| 75 | 12 | VN reads the second pāda रसनं काञ्चिजिह्वयोः and remarks that Amaradatta too reads in the same manner p. 429. |
| | | Ujjvaladatta in his Uṇādivṛtti II, 75 reads रसना in the second pāda. |
| 75 | 16 | The reading in VN is the same as that of Sarvānanda p. 793. |
| 75 | 18 | The reading in VN is the same as in Bhānuji p. 233. |
| 77 | 4 | लालाटिकः सदालस्यप्रभुभावनिदर्शिनी Mukuṭa p. 1308. |
| 78 | 4 | वशा वन्ध्यागवीपृथ्वीकरिणीयोषितोरपि is the reading in VN p. 787. |

| Page. | Verse. | Reading. |
|---|---|---|
| 79 | 10 | वसुर्योगासिशुक्लेषु देवभेदे मयूखयोः । वसू रत्ने धने स्वादौ राजवाणीश्वपक्षिषु ॥ is the reading in VN p. 793. |
| 79 | 18 | विष्टरः पादपीठे is the third pāda in VN p. 765. |
| 82 | 43 | The last word in this verse in VN is स्थाने p. 785. |
| 82 | 53 | Ujjvaladatta in the Uṇādivṛtti on III,104 reads वदान्यस्त्यागवाग्मिनोः |
| 85 | 14 | In all probability the line शर्करा शकले ज्ञेया सितोपलारजस्स्वपि is the reading of Mukuṭa for the second ardha. Mukuṭa p. 1436. |
| 86 | 26 | Mukuṭa reads the pūrvārdha thus:—शुद्धान्तोऽन्तःपुरे गुह्यकक्षाभेदे च भूपतेः p. 1341. VN reads शुद्धान्तोऽन्तःपुरे ख्यातः कक्षा भूते च भूपतेः p. 724. |
| 89 | 1 | VN remarks that the first ardha is the same in Amaradatta also p. 183. |
| 90 | 6 | सत्त्वं द्रव्ये स्वभावे च is the reading in VN p. 785. |
| 92 | 27 | VN reads in the same way as R and makes the further remark that the same tag is found in Viśva also p. 747. |
| 93 | 32 | सूदः स्यात्तस्यसदने is the reading in VN p. 735. |
| 93 | 33 | Mukuṭa reads—साबाराख्यापराधे च p. 468. VN reads सावरश्चापराधेऽपि p. 235. The uttarārdha is read in the same way as Bhānuji and R. |
| 93 | 35 | काञ्च्यां वस्त्रेऽपि च निगद्यते VN p. 504. |

| Page. | Verse. | Reading. |
|---|---|---|
| 94 | 44 | Mukuṭa and VN read in the same way as Bhānuji and make the same remark. Mukuṭa p. 632. VN pp. 343 and 706. |
| 97 | 68 | स्वित् पूजायां विकल्पे च VN p. 801. The last pāda is read by VN in the same way as Bhānuji and R. p. 802. |
| 99 | 14 | हुं स्यात् प्रश्नवितर्कयोः is the last pāda in VN p. 809. |
| 100 | 1 | क्षुद्रः कृपणः[णे] कीनाशः[शे] कदर्यान्तिकयोः VN p. 786. |

The following tags are attributed to Ajaya in the places referred to but they are not found in the extant copies of Ajayapāla's work.

Add under अ.

अशोकस्त्रिशुकिः शोके पुंसि काकलिपादपः VN p. 528.
अतिप्रकर्षप्राणस्वत्वलङ्घनेषु प्रयुज्यते VN p. 801.

Add under उ.

उषणा पिप्पली प्रोक्ता मरिचेऽप्युषणं स्मृतम् VN p. 280.

Add under क.

कुन्दं माध्ये च कुन्दस्तु यन्त्रभेदे च कुन्दरौ Mukuṭa p. 559.
निश्चये च रुतौ किल VN p. 811.

Add under त.

तूवरोऽश्टङ्गवृषभे सदा विश्मश्रुपूरुषे VN p. 763.

Add under न.

नैष्किको रजताध्यक्षे VN p. 474.
VN makes the further remark that this tag is the same in Rabhasa also.
नृत्यं प्रेक्षाधीकृत्यदर्शनयोः Mukuṭa p. 1454.

Add under प.

[पुण्यं] धर्माधर्मादिप्रामाण्यम् VN p. 751.
प्लवगो वानरे भेके सारथौ चोष्णदीधितौ VN p. 706.
परिप्लवं प्लवं वन्यं तत्कुटं नटसंज्ञकम् ।
संजायते मुस्तकारं शैवालदलसंचये ॥
कैवर्तिमुस्तके क्लीबं शोणके नाकुटं नटः ॥ Mukuṭa p. 569.

Add under भ.

भावुकं भवो भद्रामि [?] सत्तयोः Mukuṭa p. 188.

Add under व.

वत खेदेऽनुकम्पायां हर्षे संबोधनेऽद्भुते VN p. 803.

Add under श.

शिनी धवलकृष्णयोः VN p. 731.
शश्वत्पुनःसदार्थयोः Mukuṭa p. 1471 and VN p. 803.

Add under स.

सामि निन्द्रायामर्धे च VN p. 808.
सुधा गङ्गेष्टकाचूर्णं भूहीवामृतमूर्वयोः Mukuṭa p. 1365.



The Nānārthārṇavasaṅkṣepa is one of the early lexicons that refer to Ajaya and depend upon his authority several times over. The following references will make the point clear :—

1. के[1]....अजयस्तु शरीरेऽपि पुंस्येवैनमभाषत ॥ 7-2.
2. केलिः....विवादमात्रे त्वजयः कलिशब्दमभाषत ॥ 23-26.
3. गेणः[2]....अजयस्य त्विदं ग्रन्थे दृश्यते प्रमथे चले ॥ 24-42.
4. मोहैः[3]....अजयस्त्वाह तन्द्रायामपि 29-97.
5. रागः[4]....अजयस्तु वदत्यत्र लोहितादिषु 30-104.

१. This is not found in the text of Ajaya as printed.
२. Compare verse 17 on p. 32. The reading here is better.
३. Compare verse 27 on p 72.
४. See verse 14 on p. 75.

6. अक्षः[१]....अजयस्त्वाह नित्येऽपि 44-19.

7. अब्जम्[२]....अजयस्तु शङ्खेऽमुं क्लीबमभ्यधात् 45-33.

8. ऊर्मिः[३]....अजयस्तु पठत्येनमुत्पीडायामपि 52-114.

9. करः[४]....अजयस्त्वाह मुद्रायां हिंसाविक्षेपयोरपि 55-139.

10. कंसः[५]....अजयस्त्वाह हंसेऽपि तत्र लिङ्गं द्वयोरपि 56-155.

11. कृत्यः[६]....अजयो विद्विषि प्राह 66-271.

12. खेटम्[७]....अजयस्तु मृगव्ये च 70-322.

13. गण्डः[८]....अजयस्य त्विदं ग्रन्थे दृश्यते साध्वसाधु वा ॥ 71-329.

14. गौरः[९]....अजयस्त्वाह शुद्धेऽपि स चैको लक्ष्यवेदिनाम् ॥ 75-378.

15. चन्द्रः[१०]....कम्पिलाख्यद्रुमे बर्हिमेचकेऽप्यजयोऽब्रवीत् ॥ 76-394.

16. छिद्रम्[११]....दूषणे त्वजयोऽब्रवीत् 80-445.

17. जया[१२]....पार्वत्यां त्वजयोऽब्रवीत् 81-448.

18. तैलः[१३]....अजयस्तु पठत्येनत् कार्यबीजे घनेऽपि च ॥ 85-502.

१. See verse 6 on p. 1.

२. This word is not found in the text as printed.

३. See verse 2 on p. 17.

४. These meanings are not found in the text as printed. Compare verse 22 on p. 25.

५. This word is not found in the text as printed.

६. The meaning given here is not found in the text as printed.

७. See verse 3 on p. 30.

८. This word is not found in the text as printed.

९. See verse 2 on p. 31

१०. Compare verse 3 on p. 36. The reading given here seems to be better.

११. See verse 4 on p. 38.

१२. See verse 16 on p. 40.

१३. See verse 1 on p. 44. One of the meanings given here is not found in the text.

19. दीयः....अजयस्त्वाह सोल्लुण्ठभाषिते रक्षणादिषु ॥ 93-590.

20. धैवः....अजयः पुनः । प्रभुमात्रेऽब्रवीदेनं तदसन्मूलहानितः ॥ 97-633.

21. धिष्ण्यः....अजयस्तु बलेऽप्येतत् स्वनिघण्टावचीकृतत् ॥ 98-646.

22. निर्ष्कः....अजयः शाश्वतश्चैनं हेम्न एव पलेऽपठीत् ॥ 101-687.

23. न्यूङ्खः....सुन्दरेऽथाजयोऽवदत् ॥ 102-696.

24. पक्वम्....अजयस्तु खलेऽप्याह तस्यार्थः चिन्त्यतां बुधैः ॥ 104-720.

25. पतिः....अथाजयोऽब्रवीत् । गतौ मूलेऽपि 105-725, 6.

26. पटुः....ब्रूते त्वजयशाब्दिकः । तीक्ष्णे च 105-734.

27. पिण्डः....अजयस्तु निवापेऽपि शब्दवित्प्राब्रवीदमुम् ॥ 108-770.

28. पीलुः....ब्रूते त्वजयशाब्दिकः । फालास्थिखण्डकेऽपि 109-781.

29. पुण्यम्....अजयस्तु मनोज्ञात् तं भेदेनाह मनोहरे ॥ 110-786.

30. बुधः....अजयस्तु सुरेऽप्याह 117-867.

31. भोगी[१३]....अजयस्त्वाह वैयावृत्यकरे तथा । भूपालेऽपि 122-925.

32. मल्लिस्तु मत्स्यभेदे स्त्री स्यात् कपालकरङ्कयोः । इत्येवमजयः स्माह 124-953.

१. See verse 2 on p. 47.

२. This word is not found in the text as printed.

३. See verse 6 on p. 50.

४. See verse 1 on p. 52.

५. See verse 16 on p. 53.

६. This word is not found in the text as printed.

७. See verse 66 on p. 62.

८. See verse 34 on p. 59.

९. See verse 40 on p. 60.

१०. See verse 39 on p. 60. This reading is better.

११. This word is not found in the text as printed.

१२. See verse 48 on p. 82. In the text as printed, the initial letter is *vu* and not *bu*.

१३. This word is not found in the text as printed.

१४. See verse 8 on p. 70.

33. मेन्तु:[१]····अजयस्त्वाह विज्ञे 125-962.

34. मुण्ड:[२]····मुण्डने तु नरस्त्रियो: । अजयस्त्वाह 128-1004.

35. रैग्न:[३]····अजयस्त्वाह दर्पेऽपि 136-1089.

36. रोहित्[४]····अजयस्तु द्वयोराह मत्स्यजात्यन्तरेऽपि च ॥ 139-1124.

37. वेर्ण:[५]····अजयस्त्वाह चित्रेऽपि

38. वैसु:[६]····प्रशस्तेऽथाजय: प्राह 146-1205.

39. व्याल:[७]····अजयस्त्वपठद्व्याघ्रे स एव त्रि: खलेऽपठीत् ॥ 147-1220.

40. वानम्[८]····कटे त्वप्यजयोऽब्रवीत् ॥ 148-1229.

41. वारि:[९]····मतङ्गजा: । यत्र देशेषु गृह्यन्ते तत्रत्वाहाजय: कृती ॥
149-1242.

42. विष्टि:[१०]····अजयस्त्वाह मूल्येऽपि 150-1255.

43. वीरे:[११]····अजयस्तु परेऽप्याह तद्विचार्यं विचक्षणै: ॥ 150-1263.

44. वीर्यम्[१२]····अजयस्त्वाह दीप्तौ च नैतदन्यत्र दृश्यते ॥ 151-1268.

१. This word is not found in the edition now published.

२. See verse 28 on p. 72.

३. The meaning given here is not found in the text now presented.

४. Compare verse 6 on p. 74.

५. See verse 2 on p. 78.

६. This meaning is not found in the printed text.

७. See verse 48 on p. 82.

८. In the edition now issued the form is found as वाळम्. See verse 22 on p. 80. It may be noted that in Bengali ल and न are written almost alike.

९. This meaning is not found in the text as printed. See verse 22 on p. 80.

१०. See verse 35 on p. 81.

११. Compare verse 49 on p. 82. The reading in the printed book is वरे

१२. This meaning is not found in the text as printed.

45. वेशी:····अजयस्तु पठत्येनं गृहमात्रेऽपि शब्दवित् ॥ 152-1287.

46. [1]शल्यः····अजयस्तु वदत्येनं काण्डेऽर्थस्तस्य चिन्त्यताम् ॥ 154-1306.

47. [2]शिखी····अजयस्तु प्रधानेऽपि 159-1366.

48. [3]संपुटः····अजयः पुनः । कलिकायां कवरुके II, 31-236.

49. [4]स्थपतिः····धनदे शिल्पिभेदे चेत्यजयः II, 32-241.

50. [5]तलितम्····वाद्यभेदेऽजयः प्राह II, 36-37.

51. [6]नाभीलम्····अजयो नाभिगर्तण्डे II, 36-41.

52. [7]मूर्च्छितः....अजयस्तु प्रवृद्धेऽपि II, 45-46.

53. [8]अरुणा....निःशब्दे चाजयादयः II, 49-29.

54. [9]आशयः....अजयः प्राह कृपणे II, 62-184.

55. [10]उत्तरम्....श्रेष्ठे चाप्यजयस्त्वाह II, 68-249.

56. [11]उन्माथः....स्तुवे चाजयोऽब्रवीत् II, 69-267.

57. [12]कङ्कणम्....सूत्रे त्वजय उक्तवान् II, 75-326.

58. [13]कलिङ्गः....दृश्यतेऽजयकोशेऽत्र कलिङ्गाख्येति II, 76-338.

१. This word is not found in the text as printed.

२. This meaning is not found in the text as printed.

३. Compare verse 23 on p. 92. There are differences in the reading.

४. See verse 8 on p. 90.

५. Compare verse 11 on p. 45.

६. Compare verse 13 on p. 53.

७. See verse 24 on p. 72.

८. This meaning is not found in the text as printed.

९. Compare verse 1 on p. 9.

१०. See verse 5 on p. 14.

११. This meaning is not found in the text as printed.

१२. See verse 49 on p. 27.

१३. This meaning is not found in the text as printed.

59. कारणम्[1]....घाते चेत्यजयोऽब्रवीत् ॥ II, 84-440.

60. खिङ्कारैः[2]....अजयः पुनः शिवाभेद इति ब्रूते II, 101-624.

61. खोलकः[3]....गीतसत्यां च काञ्च्यां च स्त्रीत्येवमजयोऽपठीत् ॥
II, 101-630.

62. गोलकः[4]....अजयस्त्वस्य वाच्यत्वेनापठत् द्वयम् । गुडं गोलं च तद्सत्
II, 107-695.

63. चतुष्की[5]....मशकहरीत्यजयस्त्वाह शब्दवित् ॥ II, 111-731.

64. प्रधानम्[6]....अजयः पुनः । परमात्मनि बुद्धौ च महामात्रेऽप्यधीतवान् ॥
II, 142-1089.

65. मत्सरा[7]....अजयोऽपठीत् । यागसाधनसोमाख्यद्रव्ये च
II, 163-1327.

66. मधुकम्[8]....मधुयष्ट्याख्यभेषजेऽथाजयोऽवदत् II, 164-1333.

67. राजीवम्[9]....अजयस्त्वाह राजोपजीविनि II, 179-1508.

68. लोचकः[10]....अजयस्तु पठत्येनं नीलीरक्तांशुके त्रिषु ॥
दुष्टबुद्धावथ प्राह निर्बुद्धावजयस्तथा ॥ II, 185-1581, 82.

69. विग्रहः[11]....अजयस्त्वह विस्तारात्पृथगेव वै ॥ II, 197-1723.

70. शुषिरः[12]....वाद्यभेदे त्वजय उक्तवान् ॥ II, 208-1846.

१. See verse 56 on p. 28.

२. Compare verse 3 on p 30. The form in the printed text is खिङ्किकः.

३. Compare verse 2 on p. 30.

४. Compare verse 17 on p. 32.

५. See verse 8 on p. 36.

६. This word is not found in the text as printed.

७. This meaning is not found in the printed text.

८. See verse 15 on p. 71.

९. This word is not found in the text as printed.

१०. See verse 2 on p. 77.

११. See verse 21 on p. 80.

१२. See verse 23 on p. 86.

71. [1]समयः....अजयस्तु ब्रूते निर्देशसंपदोः ॥ II, 210-1812.

72. [2]साहसम्....अथाजयः । कृतकार्ये त्रिः II, 217-1946-7.

73. [3]अनुमतिः....अजयः पुनः । आम्ले चेति पठति III, 1-6.

74. [4]अभिशस्तिः....प्रार्थने चाभिशापे च अजयस्यार्थमुत्तमम् ॥ III, 1-7.

75. [5]रङ्गमाता....लाक्षायां चाजयोदिता ॥ III, 5-44.

76. [6]श्लेष्मघना....केतक्यां चाजयेन हि ॥ III, 5-52.

77. [7]अवष्टम्भः....स्तम्भे चाप्यजयोऽवदत् ॥ III, 8-18.

78. [8]परिवापः....स्थाप्ये बीजेऽपि चाजयः III, 14-84.

79. [9]विशेलिमः....बिन्दुतन्त्र इत्यजयोऽपठीत् ॥ III, 16-112.

80. [10]कक्ष्यापालस्त्वौपरिके शूरपालेऽजयोदितः ॥ III, 28-17.

81. [11]आत्मनीनः....अजयस्य त्वयं पाठः प्राणधारे विदूषके ॥ III, 31-69.

82. [12]शतपत्रम्....अजयः पुनः । मयूरे सारसेऽप्याह III, 77-594.

83. [13]समञ्जसम्....अजयस्तु त्रिरभ्यस्तेऽप्युचितेऽप्याह III, 82-650.

१. See verse 5 on p. 90.

२. See verse 36 on p. 93.

३. This meaning is not found in the text as printed.

४. See verse 19 on p. 3.

५. See verse 10 on p. 74.

६. See verse 10 on p. 85.

७. See verse 30 on p. 4.

८. See verse 41 on p. 60.

९. This word is not found in the text as printnd.

१०. See verse 45 on p. 27.

११. See verse 18 on p. 10.

१२. Compare verse 18 on p. 85.

१३. See verse 32 on p. 93.

The following ardha, attributed to Ajaya by the commentator on the Karpūramañjarī is not found in the text as printed:

नेपथ्यं स्याज्जवनिका रङ्गभूमिप्रसाधनम् p. 6.

Puruṣottama, in his commentary on the Anargharāghava attributes the following tag to Ajaya and it is not found in the text as printed:

मूर्धन्यः स्यात् शिरोरत्ने प्रधाने श्रेष्ठसंज्ञके p. 34.

*

*

# INDEX OF WORDS



# CORRECTIONS AND EMENDATIONS

| Page. | Verse | Read |
|---|---|---|
| 7 | 67a | अभिरूपो |
| 8 | 70c | ण्यधि स्यात् |
| 24 | 14a | कर्णिका हस्ति |
| 25 | 24b | [काम्पिल्यवृक्षे] |
| 27 | 51a | कीलः स्थाणव |
| 31 | 8b | गुह्या शाखापुरे |
| 32 | 17b | गोले जारतो |
| 49 | 22b | दुर्विधो |
| 58 | | add at the end of footnote 4 -see also verse 7 on p. 56. |
| 62 | 67b | Add a footnote under पार्थिव and read the footnote thus -Compare also verse 82 on p. 64. |
| 67 | 11a | बला कक्षे |
| 76 | 21c | वारुणे |
| 77 | 6b | लौहित्यो |
| | | लुब्धो |
| | 7b | लभ्यं युक्ते |
| | 8b | छवश्छेद |
| 78 | 8b | विपत्तारेऽशुभे |
| 79 | 10a | वसुर्योक्त्रेऽग्नौ |
| | 20b | व्यलीकं |
| 86 | 26a | शुद्धान्तोऽन्तःपुरे |
| | 26b | शिला द्वारो |
| 88 | 38a | श्लोकः |
| 90 | 6b | चेतसि |
| 91 | 10b | स्वामी पति |
| 93 | 37a | तथा धवल |
| 95 | 57b | सूक्ष्मात्याध्या |
| | | [सूक्ष्मं स्वध्या] |
| 96 | 58b | दहने |
| | 6b6 | तिनिशो |

# MADRAS UNIVERSITY SANSKRIT SERIES

## WORKS ALREADY PUBLISHED

| | | Rs. | A. | P. |
|---|---|---|---|---|
| Ṛgvedānukramaṇī of Mādhavabhaṭṭa | .... | 3 | 8 | 0 |
| Sphoṭasiddhi of Maṇḍanamiśra | .... | 3 | 0 | 0 |
| Taittirīyaprātiśākhya with Māhiṣeya Bhāṣya | .... | 2 | 0 | 0 |
| Liṅgānuśāsana of Harṣavardhana | .... | 1 | 8 | 0 |
| Uṇādisūtravṛtti of S'vetavanavāsin | .... | 3 | 0 | 0 |
| Uṇādisūtravṛtti of Nārāyaṇa | .... | 2 | 8 | 0 |
| Bṛhatī with Ṛjuvimalā [Tarkapāda] | .... | 5 | 0 | 0 |
| Vājasaneyiprātiśākhya with two commentaries | .... | 4 | 0 | 0 |
| Uṇādisūtravṛtti of Durgasimha and Bhoja | .... | 3 | 0 | 0 |
| Ṛgvedabhāṣya by Skandasvāmin [1st Aṣṭaka] | .... | 6 | 0 | 0 |
| Brahmasūtraśāṅkarabhāṣya with the Prakaṭārtha-vivaraṇa Vol. I. | .... | 6 | 0 | 0 |
| Sāhityaratnākara [Bulletin] | .... | 1 | 0 | 0 |
| Raghunāthābhyudaya [Bulletin] | .... | 1 | 0 | 0 |
| Mimāṁsābhāṣyapariśiṣṭa by S'ālikanātha. | ... | 2 | 8 | 0 |
| Nānārthasaṅgraha of Ajayapāla. | .... | 1 | 8 | 0 |

## IN THE PRESS

Sarasvatīkaṇṭhābharaṇa of Bhoja.

Daśapādīvṛtti.

Mīmāṁsānayaviveka with the commentary of Ravideva [Tarkapāda].

Mīmāṁsāślokavārtika with the commentary of Uṁveka.

Auṇādikapadārṇava of Perusūri.

Brahmasūtraśāṅkarabhāṣya with the Prakaṭārthavivaraṇa Vol. II.

Fragments of Hārīta Dharmasūtra [Bulletin].

# WORKS UNDER PREPARATION

BY

T. R. CHINTAMANI, M.A., PH. D.

1. The Bhagavadgītā of the Kashmirian Recension with the commentary of Rāmakaṇṭha.

2. Kauṣītaki Srauta Sūtra.

3. Sāmbavya Gṛhya Sūtra with the commentaries of Bhavatrāta and Svetadatta.

4. Saṅkarṣakāṇḍabhāṣya of Devasvāmin.

5. The Nāmaliṅgānuśāsana with the commentaries of Subhūti and Rāyamukuṭa.

6. Sābdikābharaṇa of Hariyogimiśra.

7. Prmāṇamālā of Ānondabodha with the commentary of Citsukha. [Bulletin]

8. The Brahmasūtrabhāṣya of Bhāskara.